श्रीगणेशाय नमः ॥ भाषाटीकासहित अनन्तकी पूजाविधि ॥ सबेरेके समय गंगादि पवित्र नदियोंमें स्नान कर और अपनी नित्यक्रियाको कर अनन्त भगवान्‌का अपने मनमें ध्यान करता हुआ पवित्र होकर बैठे चिकने कलशको दो वस्त्रोंसे लपेटकर रक्खे और मुट्ठीभर कुशाके शेषजी बनावे ॥ उस कलशके निकट

श्रीगणेशाय नमः ॥ अथानन्तपूजाविधिः ॥ प्रातर्नद्यादिके स्नात्वा नित्यकर्म समाप्य च ॥ अनन्तं हृदये कृत्वा शुचिस्तत्र समाहितः ॥ अव्रणं कलशं चैव वस्त्रयुग्मेन वेष्टितम् ॥ मुष्टिमात्रेण दर्भैस्तु फणिराजं च कारयेत् ॥ स्थापयेत्कलशस्याग्रे जगदाधारमव्ययम् ॥ आराधयेदनन्तं च तस्मिन् कुम्भे विशेषतः ॥ गोचर्ममात्रमालिप्य गोमयेन विचक्षणः॥ तन्मध्ये स्थण्डिलं कृत्वा पद्म-मष्टदलं लिखेत् ॥ तस्योपरि न्यसेत् कुम्भं चूतपल्लवसंयुतम् ॥ प्राणायामं ततः कृत्वा तिथ्यादि परिकीर्तयेत् ॥ मम सहकुटुम्बस्य क्षेमस्थैर्यायुरारोग्यचतुर्विधपुरुषार्थसिद्ध्यर्थं मया आच

शेषजीको स्थापित कर कलशमें अनन्तदेवका ध्यान करे ॥ एक गोचर्मकी बराबर जमीनको गोबरसे लीपकर चतुर मनुष्य पृथ्वीको साफ कर उसमें आठ पत्तोंवाला कमल बनावे ॥ कलशमें आमके पत्ते रख उस कमलके

ऊपर स्थापित करे फिर प्राणायाम करके तिथ्यादिकोंका उच्चारण करे और मम सह०—यहांसे लेकर संकल्प करे ॥ पृथ्वी०—इस मन्त्रसे आसनविधिको करे ॥ कलश० सर्वे० सिता०—इत्यादि मंत्रोंसे कलशमें वरुणका पूजन करे ॥ फिर शंख और घण्टाकी भी पूजा करे ॥ अपवित्रः०—इस मन्त्रसे पूजाकी सामग्रीका और अपने

रितस्य आचर्यमाणस्य च व्रतस्य सम्पूर्णफलावाप्त्यर्थं श्रीमदनन्तदेवताप्रीत्यर्थं यथाज्ञानेन ध्यानावाहनादिषोडशोपचारैः श्रीमदनन्तपूजां करिष्ये ॥ तथा च आसनादि कलशाराधनादि च करिष्ये ॥ इति संकल्प्य ॥ पृथ्वि० इत्यासनविधिं कृत्वा ॥ कलशस्य० ॥ सर्वे समुद्राः० ॥ सितासिते० ॥ कलशे वरुणं संपूज्य ॥ ततः शङ्खं घण्टां च पूजयेत् ॥ अपवित्रः०॥ पूजा द्रव्याणि आत्मानं च प्रोक्ष्य यमुनां पूजयेत् ॥ तद्यथा—श्रीमदनन्तव्रताङ्गत्वेन श्रीयमुनापूजनं करिष्ये ॥ लोकपालस्तुतां देवीमिन्द्रनीलसमुद्भवाम् ॥ यमुने त्वामहं ध्याये सर्वकामार्थसिद्धये ॥ ध्यानम् ॥ सरस्वति नमस्तुभ्यं सर्वकामप्रदायिनि ॥ आगच्छ देवि यमुने व्रतसंपूर्तिहेतवे ॥

आपको मार्जन करके पूजा करे । सो जैसे लिखा भी है—श्रीअनन्त देवका अंग होनेसे यमुनाकी पूजा करता हूँ

लोकपालस्तु०—इस मन्त्रसे ध्यान करे ॥ सरस्वति०—इससे आवाहन करे ॥ सिंहासन०—इस मन्त्रसे आसन प्रदान करे ॥ रुद्रपादे०— इस मन्त्रसे पाद्य दे ॥ गरुडपादे०—इस मन्त्रसे अर्घ्य दे ॥ विष्णुपादो०—इस मन्त्रसे आचमन करे ॥ सर्वपापहरे०—इस मन्त्रसे मधुपर्कप्रदान करे ॥ नन्दिपादे०—इस मन्त्र करके पंचामृतसे

इमं मे गङ्गे० ॥ इत्यावाह्य ॥ सिंहासनसमारूढे देवशक्तिसमन्विते ॥ सर्वलक्षणसंपूर्णे यमुनायै नमोऽस्तु ते ॥ आसनम् ॥ रुद्रपादे नमस्तुभ्यं सर्वलोकहितप्रिये ॥ सर्वपापप्रशमनि तरङ्गिण्यै नमोऽस्तु ते ॥ पाद्यम् ॥ गरुडपादे नमस्तुभ्यं शङ्करप्रियभामिनि ॥ सर्वकामप्रदे देवि यमुने ते नमो नमः ॥ अर्घ्यम् ॥ विष्णुपादोद्भवे देवि सर्वाभरणभूषिते ॥ कृष्णमूर्ते महादेवि कृष्णावेण्यै नमो नमः ॥ आचमनम् ॥ सर्वपापहरे देवि विश्वप्रियप्रदर्शिनि ॥ सौभाग्यं यमुने देहि यमुनायै नमोऽस्तु ते ॥ मधुपर्कम्॥नन्दिपादे महादेवि शंकरार्धशरीरिणि ॥ सर्वलोकहिते देवि भीमरथ्यै नमोऽस्तु ते॥ पञ्चामृतस्नानम्॥सिंहपादोत्तमे देवि नारसिंहसमप्रभे॥सर्वलक्षणसम्पूर्णे भवनाशिनि ते नमः

स्नान करावे ॥ सिंहपादोत्तमे०—इस मन्त्र करके पवित्र जलसे स्नान करावे ॥

विष्णुपादाब्ज०—इस मन्त्रसे श्वेत वस्त्र प्रदान करे ॥ त्रैयम्बक०—इससे चोली प्रदान करे॥माणिक्य०—इससे सब गहने देने चाहिये ॥ चन्दनागरु०—इस मन्त्रसे गंध दे ॥ श्वेतांश्च०—इस मन्त्रसे अक्षत दे ॥ मन्दारमालती०—इस



शुद्धोदकस्नानम्॥विष्णुपादाब्जसंभूते गङ्गे त्रिपथगामिनि॥सर्वपापहरे देवि भागीरथ्यै नमोऽस्तु ते॥ श्वेतवस्त्रम्॥ त्रैयम्बकजटोद्भूते गौतमस्याघनाशिनि॥सप्तधा सागरं यान्ति गोदावरि नमोऽस्तु ते ॥ कञ्चुकीम्॥माणिक्यमुक्तावलिकौस्तुभांश्च गोमेदवैडूर्यसुपुष्परागैः॥वज्रैश्च नीलैश्च सुशोभितानि गृहाण सर्वाभरणानि देवि॥ आभरणानि॥चन्दनागरुकस्तूरीरोचनं कुंकुमं तथा॥ कर्पूरेण समायुक्तं गन्धं दद्मि च भक्तितः ॥ गन्धम् ॥ श्वेतांश्च चन्द्रवर्णाभान् हरिद्रारागराञ्जितान् ॥ अक्षतांश्च सुरश्रेष्ठे ददामि यमुने शुभे ॥ अक्षतान् ॥ मन्दारमालतीजातीकेतकीपाटलैः शुभैः ॥ पूजयामि च देवेशि यमुने भक्तवत्सले॥ पुष्पाणि ॥ अथाङ्गपूजा ॥ चञ्चलायै नमः पादौ पूजयामि ॥ चपलायै



मन्त्रसे पुष्प देकर अंगपूजा करे ॥ चंचलायै०—इत्यादिसे लेकर सरस्वत्यै०—इत्यादिपर्यन्त सब अंगोंकी

पूजा है सो मूलमें ही स्पष्ट है। फिर नामोंकी पूजा करे॥ यमुनायै०—इत्यादिसे लेकर महालक्ष्मै०—इत्यादितक नमः जानुनी पूजयामि॥ भक्तवत्सलायै नमः कटी पू०॥ हरायै० नाभिं पूजयामि॥ मन्मथ-वासिन्यै० गुह्यं पू०॥ अज्ञानासिन्यै० हृदयं पू०॥ भद्रायै नमः स्तनौ पू०॥ अघहन्त्र्यै० भुजौ पू०॥ रक्तकण्ठ्यै० कण्ठं पू०॥ भवहन्त्र्यै नमः मुखं पू०॥ गौर्यै न० नेत्रे पू०॥ भागीरथ्यै० ललाटं पू०॥ यमुनायै० शिरः पू०॥ सरस्वत्यै नमः सर्वाङ्गं पूजयामि॥ अथ नामपूजा॥ यमुनायै नमः॥ सितायै०॥ कमलायै० उत्पलायै०॥ अभीष्टप्रदायै०॥ धात्र्यै०॥ हरिहररूपिण्यै नमः॥ गंगायै नमः॥ नर्मदायै नमः॥ गौर्यै०॥ भागीरथ्यै०॥ तुङ्गायै०॥ भद्रायै०॥ कृष्णावेण्यै॥ भवनाशिन्यै०॥ सरस्वत्यै०॥ कावेर्यै०॥ सिन्धवे०॥ गौतम्यै०॥ गोमत्यै०॥ गायत्र्यै०॥ गरुडायै०॥ गिरिजायै०॥ चन्द्रचूडायै०॥ सर्वैश्वर्यै०॥ महालक्ष्म्यै०॥ सर्वपापहरे देवि सर्वोपद्रवानाशिनि॥ सर्वसम्पत्प्रदे देवि यमुनायै नमोऽस्तु ते॥ इति नामपूजा॥ दशाङ्गो गुग्गुलू-नामकी पूजा भी मूलमें ही स्फुट है सो उसको करे॥ सर्वपाप०—इस मन्त्रसे यमुनाको प्रणाम कर नामपूजाको

समाप्त कर दे ॥ दशांगो०—इससे धूप दे ॥ घृतवर्ति०—इत्यादिसे दीपक करे ॥ शर्करा०—इत्यादिसे मिष्टान्न दे ॥ पानीयं०—इससे हाथ धोवे और इसीसे मुख भी धोवे ॥ कर्पूरेणं०—इससे हाथ धोकर चन्दन दे ॥ इदं

द्भूतश्चन्दनागुरुसंयुतः ॥ कपिलाघृतसंयुक्तो धूपोऽयं प्रतिगृह्यताम्॥धूपं०॥घृतवर्तिसमायुक्तं वह्निना योजितं मया ॥ गृहाण दीपकं देवि सर्वैश्वर्यप्रदायिनि ॥ दीपं० ॥ शर्करामधुसंयुक्तं दधिक्षीराज्य संयुतम् ॥ पक्वमन्नं मया दत्तं नैवेद्यं प्रतिगृह्यताम् ॥ नैवेद्यं० ॥ पानीयं पावनं श्रेष्ठं गङ्गादिसरिदु-द्भवम् ॥ हस्तप्रक्षालनं देवि गृहाण मुखशोधनम् ॥ हस्तप्रक्षालनं० ॥ मुखप्रक्षालनं० । कर्पूरेण समायुक्तं यमुने चारु चन्दनम् ॥ समर्पितं मया तुभ्यं करोद्वर्तनकं कुरु ॥ करोद्वर्तनार्थे चन्दनं० ॥ इदं फलमिति फलम्॥ पूगीफलमिति ताम्बूलं०॥हिरण्यगर्भेति दक्षिणां०॥ त्रैलोक्यपावने गंगे अन्ध-कारविनाशिनि ॥ पञ्चार्तिक्यं गृहाणेदं विश्वप्रीत्यै नमोऽस्तु ते ॥ आर्तिक्यं० ॥ केतकीजातिकु-सुमैर्मल्लिकामालतीभवैः ॥ पुष्पाञ्जलिर्मया दत्तस्तव प्रीत्यै नमोऽस्तु ते ॥ पुष्पाञ्जलिं समर्प-

फलं०—इससे अच्छे पके २ फल दे॥पूगीफलं०—इससे सुपारी चढावे॥ हिरण्य०—इत्यादिसे दक्षिणा प्रदान करे ॥

त्रैलोक्य०-इससे आरती करे॥केतकी०-इससे पुष्पांजलि समर्पण करे। यानि कानि०—से प्रदक्षिणाकरे अन्यथा० से नमस्कार करे॥ सुरासुर०—इससे प्रार्थना करे॥ यहां यमुनाकी पूजा समाप्त हो गई॥ यमुनाकलशके ऊपर

यामि॥ यानि कानि चेति प्रदक्षिणाम्। अन्यथा शरणं नास्ति त्वमेव शरणं मम॥ तस्मात्कारुण्यभावेन संरक्ष परमेश्वरि॥ नमस्का०॥ सुरासुरेन्द्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपङ्कजम्॥ परावरं पातु वरं सुमङ्गलं नमामि भक्त्या मम कामसिद्धये॥ भवानि च महालक्ष्मि सर्वकामप्रदायिनि॥ व्रतं संपूर्णतां यातु यमुनायै नमोऽस्तु ते॥ इति प्रार्थना॥ इति यमुनापूजा॥ यमुनाकलशोपरि पूर्णपात्रं निधाया स्योपरि सप्तफणायुतं शेषं संस्थाप्य पूजयेत्॥ अथ ध्यानम्॥ ब्रह्माण्डाधारभूतं च यमुनान्तरवासिनम्॥ फणासप्तसमायुक्तं ध्यायेऽनन्तं हरिप्रियम्॥ध्यायामि॥ शेषसप्तफणायुक्तं कालपन्नगनायकम्॥ अनन्तशयनार्थं त्वां भक्त्या ह्यावहयाम्यहम्॥ आवाहनम्॥ नवनागकुला

पूर्णपात्रको स्थापित कर उसके ऊपर सात फणवाले शेषजीको स्थापित कर पूजन करे॥ इस अगाडी लिखे हुए मन्त्रसे ध्यान करे॥ब्रह्माण्डाधार०—इस मन्त्रसे ध्यान करे॥ शेषं सप्तफणायुक्तं०—इस मन्त्रसे शेषजीका आवाहन

करे॥नवनाग कुलाधीश०—इस मन्त्र करके शेषजीको आसन दें॥अनन्तप्रिय शेषेश०—इस मन्त्रसे शेषजीको पाद्य
देना चाहिये ॥ ( कश्यपानन्दजनक ) इस मन्त्रसे अर्घ्य दे॥ ( सहस्रफणिरूपेण ) इस मन्त्रसे आचमन करावे ॥

धीश शेषोद्धारक काश्यप ॥ नानारत्नसमायुक्तमासनं प्रतिगृह्यताम् ॥ आसनम् ॥ अनन्तप्रिय
शेषेश जगदाधारविग्रह ॥ पाद्यं गृहाण भक्त्या त्वं काद्रवेय नमोऽस्तु ते ॥ पाद्यं० ॥ कश्यपानन्द
जनक मुनिवन्दित भोः प्रभो ॥ अर्घ्यं गृहाण सर्वज्ञ सादरं शङ्करप्रिय ॥ अर्घ्यं० ॥ सहस्रफणि
रूपेण वसुधोद्धारक प्रभो ॥ गृहाणाचमनं देव पावनं च सुशीतलम् ॥ आचमनम् ॥कुमाररूपिणे
तुभ्यं दधिमध्वाज्यसंयुतम् । मधुपर्कं प्रदास्यामि सर्पराज नमोऽस्तु ते ॥ मधुपर्कम्०॥ ततः पञ्चा
मृतस्नानम् ॥ गङ्गादिपुण्यतीर्थैस्त्वामभिषिञ्चेयमादरात् ॥ बलभद्रावतारेश नन्दन श्रीपते सखे ॥
स्नानं०॥ कौशेययुग्मं देवेश प्रीत्या तव मयार्पितम् ॥ गृहाण पन्नगाधीश तार्क्ष्यशत्रो नमोऽस्तु ते॥
वस्त्रं० ॥ सुवर्णनिर्मितं सूत्रं ग्रथितं कण्ठहारकम् ॥ अनेकरत्नैः खचितं सर्पराज नमोऽस्तु

कुमाररूपिणे तुभ्यं०—इस मन्त्रसे शेषजीको मधुपर्क प्रदान करना चाहिये॥फिर पंचामृतसे स्नान करावे। गंगादि०—

इस मन्त्रसे स्नान करावे ॥ कौशेययुग्मं०—इस मन्त्रसे वस्त्रदान करे ॥ सुवर्णनिर्मितं०—इससे यज्ञोपवीत दे ॥ अनेकरत्नान्वित०—इत्यादिसे सम्पूर्ण गहने देने चाहिये ॥ श्रीखण्डं०—इससे चन्दन चढ़ावे ॥ अक्षतांश्च०—इस करके अक्षत दे ॥ करवीरै०—इत्यादि करके फूल चढ़ावे ॥ फिर अंगोंका पूजन करे ॥

ते॥ यज्ञोपवीतम् ॥ अनेकरत्नान्वितहेमकुण्डले माणिक्यसङ्काशितकङ्कणद्वयम् ॥ हेमाङ्गुलीयं कृतरत्नमुद्रिकं हैमं किरीटं फणिराज तेऽर्पितम् ॥ सर्वाभरणम् ॥ श्रीखण्डं० ॥ चन्दनं० ॥ अक्षतांश्च सुर० ॥ अक्षतान्० ॥ करवीरैर्जातिकुसुमैश्च० ॥ पुष्पाणि० ॥ अथाङ्गपूजा ॥ सहस्रपादाय० पादौ पू० ॥ गूढगुल्फाय० गुल्फौ पू० ॥ हेमजङ्घाय न० जंघे पू० ॥ मन्दगतये० जानुनी पू० ॥ पीताम्बरधराय कटिं पू० ॥ गम्भीरनाभये० नाभिं पूज० ॥ पवनाशनाय० उदरं पू० ॥ उरगाय० हस्तौ पू० ॥ कालियाय नमः भुजौ पूजयामि ॥ कम्बुकण्ठाय नमः कण्ठं पूजयामि ॥ विषवक्त्राय नमः वक्त्रं पूजयामि ॥ फणाभूषणाय० ललाटं पू० । लक्ष्मणाय० शिरः पूजयामि ॥

सहस्रपादाय०—यहांसे लेकर अनन्तप्रियाय तक सब अंगोंकी पूजा है ॥ सो मूलहीमें सीधी रीतिसे

 

होगी ॥ यह अंगपूजा समाप्त हो गयी ॥ वनस्पति०—औरं साज्यं च वर्तिं०—इत्यादिक इन दो मन्त्रोंसे धूप दीप प्रदान करे ॥ नैवेद्यं०—इस करके मिष्टान्न दे ॥ फिर बीचमें जल देकर लेपन करनेको चन्दन दे। पूगीफलं०—

अनन्तप्रियाय सर्वाङ्गं पूजयामि ॥ इत्यङ्गपूजा ॥ वनस्पति०॥ धूपम् ॥ साज्यं च वर्तिं०॥ दीपम्॥ नैवेद्यं गृ० ॥ नैवेद्यम् ॥ मध्ये पानीयम् ॥ करोद्वर्तनार्थं चन्दनम् ॥ पूगीफ० तांबूलम् ॥ इदं फलमिति फलं० ॥ हिरण्यगर्भेति दक्षिणां० ॥ श्रिये जात इति नीराजनम् ॥ नानाकुसुमसंयुक्तं पुष्पाञ्जलिमिमं प्रभो ॥ कश्यपानन्दजनक सर्पेश प्रतिगृह्यताम् ॥ मन्त्रपुष्पम् ॥ यानि कानि० प्रदक्षिणा० ॥ नमोऽस्त्वनन्ताय० नमस्कारान्० ॥ अनन्त कल्पोक्तफलं देहि मे त्वं महीश्वर ॥ त्वत्पूजारहितश्चार्द्धं फलं प्राप्नोति मानवः ॥ प्रार्थना० ॥ इति शेषपूजा ॥ प्राग्द्वारे ॥ द्वारश्रियै०

इससे सुपारी दे ॥ ताम्बूलं०—इससे पान दे॥इदं फ०—इत्यादि करके फल दे ॥ हिरण्य०—इससे दक्षिणा दे ॥ श्रिये जात०—इस करके नीराजन करे ॥ नानाकुसुम०—इत्यादि मन्त्र पढकर पुष्प दे ॥ यानि कानि०—इस मन्त्रसे परिक्रमा करे ॥ नमोऽस्त्व०—इस मन्त्रसे नमस्कार करे ॥ अनन्त कल्पोक्त०—इस मन्त्रसे प्रार्थना करे।

इति शेषपूजा ॥ द्वारश्रियै०—यहांसे लेकर और पद्मनिधये०—इन मंत्रोंसे पूर्वके द्वारमें पूजा करे ॥ द्वारश्रियै०—इत्यादिसे लेकर पद्मनिधये०—यहांतकके मंत्रोंसे दक्षिणके द्वारमें पूजे ॥ द्वारश्रियै०—यहांसे लेकर पद्मनिधये०—

नन्दायै० सुनन्दायै० धात्र्यै न० विधात्र्यै न० चिच्छक्त्यै० शङ्खनिधये न० पद्मनिधये न० ॥ दक्षिणद्वारे ॥ द्वारश्रियै० चण्डायै० प्रचण्डायै० धात्र्यै न० चिच्छक्त्यै० मायाशक्त्यै० शङ्खनिधये० पद्मनिधये न० ॥ पश्चिमद्वारे ॥ द्वारश्रियै० बलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै न० मायाशक्त्यै० शङ्खनिधये० पद्मनिधये० ॥ उत्तरद्वारे ॥ द्वारश्रियै महाबलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शङ्खनिधये० पद्मनिधये० ॥ अथ पीठपूजा ॥ मध्ये वास्तुपुरुषायः न० मण्डूकाय० कालाग्निरुद्राय न० आधारशक्त्यै न० कूर्माय० पृथिव्यै० अमृतार्णवाय० श्वेतद्वीपाय० कल्पवृक्षेभ्यो० मणिमन्दिराय न० हेमपीठाय० धर्माय० अधर्माय०

यहांतकके मन्त्रोंसे पश्चिमके द्वारमें पूजा करे ॥ द्वारश्रियै०—से लेकर पद्मनिधये०—तक उत्तरके द्वारमें पूजा करे ॥ अब सिंहासनकी पूजा करे ॥ मध्ये वास्तुपुरुषाय०—इत्यादि मंत्रोंसे लेकर आधारशक्ति०—

इत्यादि मन्त्रोंपर्यन्तसे सिंहासनकी पूजा मूलहीमें देखकर करलेनी चाहिये ॥ इति सिंहासनपूजा ॥
इस प्राणप्रतिष्ठामन्त्रके ब्रह्मा, विष्णु, शिव ये ऋषि हैं ॥ ऋक्, यजुः, साम, अथर्व ये छन्द हैं,

ज्ञानाय० वैराग्याय० ऐश्वर्याय० अनैश्वर्याय०सहस्रफणान्वितायानन्ताय० सर्वसत्त्वाय न० पद्माय० आनन्दकन्दाय० संविन्नालाय० विकारमयकेसरेभ्यो० प्रकृतिमयपत्रेभ्यो० सूर्यमण्डलाय० चन्द्र मण्डलाय० वह्निमण्डलाय० सं सत्त्वाय०रं रजसे० तं तमसे०आत्मने० परमात्मने०अन्तरात्मने० ज्ञानात्मने० प्राणात्मने० कालात्मने० विद्यात्मने० ॥ पूर्वादिदिक्षु ॥ जयायै० विजयायै नमः अजितायै नमः। अपराजितायै० नित्यायै० विनाशिन्यै० दोग्ध्यै नमः अघोरायै नमः। मङ्गलायै० अपारशक्तिकमलासनायै नमः ॥ इति पीठपूजा ॥ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामाथर्वाणि च्छन्दांसि ॥ परा प्राणशक्तिर्देवता ॥ आं बीजम् ॥ ह्रीं शक्तिः ॥ क्रौं कीलकम् ॥ श्रीमदनन्तस्य प्राणप्रतिष्ठापने विनि०। ॐ आंह्रींक्रौंअंयंरंलंवंशंषंसंहंळं

प्राण शक्ति देवता है ॥ आं बीजम्०—इन सबको पढकर फिर पीछसे अनन्तकी पूजा करे ॥ तत्पश्चात् मूल

मन्त्रसे नवीन आमके पत्तेके समान कांतिवाले डाढी मूछसे युक्त पीतांबर धारण करनेवाले चक्र, शंख गदाको धारणकरनेवाले शेषशायी समुद्रमें स्थित विष्णुभगवान्का ध्यान करे ॥ यह ध्यानका मन्त्र है ॥ हे देवताओंके

क्षंअः क्रौंह्रीं आं अनन्तस्य प्राणा इह प्राणाः॥ॐ आंह्रीं० अनन्तस्य जीव इह स्थितः। ॐ आंह्रीं क्रौं० अनन्तस्य सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ असुनीते० चत्वारिवाक्० गर्भाधानादिसंस्कारसिद्ध्यर्थं पञ्चदश १५ प्रणवावृत्तीः करिष्ये ॥ ॐ रक्ताम्भो० परा नः ॥ अथानन्तपूजा ॥ ततस्तु मूलमन्त्रेण नमस्कृत्य जनार्दनम् ॥ नवाम्रपल्लवाभासं पिङ्गश्मश्रुविलोचनम् ॥ पीताम्बरधरं देवं शङ्खचक्रगदाधरम् ॥ अलंकृतं समुद्रस्थं विश्वरूपं विचिन्तये ॥ ध्यायामि ॥ आगच्छानन्त देवेश तेजोराशे जगत्पते ॥ इमां मया कृतां पूजां गृहाण पुरुषोत्तम ॥ सहस्रशीर्षा० आवाहनम् ॥ नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ॥ आसनं देवदेवेश गृहाण पुरुषोत्तम ॥ पुरुष० आसनम्०॥ गङ्गादिसर्वतीर्थेभ्यो

ईश्वर ! जगत्के पति !! अनन्तदेव !!! इस मेरी करी पूजाको आप ग्रहण कीजिये ॥ सहस्रशी०–इससे आवाहन करे ॥

नानारत्न०—इससे और पुरुष०—इत्यादि दो मन्त्रोंसे आसन दे ॥ गङ्गा०—यहांसे लेकर एतावा०—इन दो मन्त्रोंसे पाद्य दे । अनन्ता०—इससे और त्रिपाद्०—इत्यादि दो मन्त्रोंसे अर्घ्य दे ॥ गंगोदकम्०—इस



मया प्रार्थनयाऽऽहृतम् ॥ तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥ एतावा० ॥ पाद्यम्० ॥ अनन्तानन्त देवेश अनन्तफलदायक ॥ अनन्तानन्तरूपोऽसि गृहाणार्घ्यं नमोऽस्तु ते ॥ त्रिपाद्० ॥ अर्घ्यम्० ॥ गङ्गोदकं समानीतं सुवर्णकलशे स्थितम् ॥ आचम्यतां हृषीकेश प्रसीद पुरुषोत्तम ॥ तस्माद्वि० ॥ आचम० ॥ अनन्तगुणरूपाय विश्वरूपधराय च ॥ नमो महात्मदेवाय अनन्ताय नमो नमः ॥ यत्पुरु० ॥ स्नानं० ॥ ततः पञ्चामृतस्नानम् ॥ सुरभेस्तु समुत्पन्नं देवानामपि दुर्लभम् ॥ पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम् ॥ आप्यायस्व० ॥ पयःस्नानं स० ॥ चन्द्रमण्डलसंकाशं सर्वदेवप्रियं हि यत् ॥ ददामि दधि देवेश स्नानार्थं प्र० ॥

और तस्माद्वि०—इन दो मन्त्रोंसे आचमन करावे ॥ अनन्त०—इस करके और यत्पुरु०—इन दो मन्त्रोंसे स्नान करावे ॥ फिर पंचामृतसे स्नान करावे ॥ सुरभेस्तु०—और आप्यायस्व०—इन दो मन्त्रों

करके दूधसे स्नान करावे ॥ चन्द्रमण्डल०—और दधिक्रा०—इन दो मन्त्रोंकरके दहीसे स्नान करावे ॥ आज्यं० और घृतं मिमिक्षे०—इन दो मन्त्रों करके घृत (घी) से स्नान करावे ॥ सर्वौषधि०—और मधु०—इन

दधिक्राव्णो० ॥ दधिस्ना० ॥ आज्यं सुराणामा०॥ घृतं मिमिक्षे घृतमस्य योनिर्घृतेश्रितो घृतम्वस्य धाम॥अनुष्वधमावह मादयस्व स्वाहा कृतं वृषभ वक्षि हव्यम्॥घृतस्नानम्० ॥ सर्वौषधिसमुत्पन्नं पीयूषसदृशं मधु ॥ स्नानाय ते मया दत्तं गृहाण परमेश्वर ॥ मधु वाता० ॥ मधुस्ना० ॥ इक्षुदण्ड-समुद्भूतां शर्करां मधुरां शुभाम् । स्नानाय ते मया दत्तां गृहाण परमेश्वर ॥ स्वादुःपवस्वेति० ॥ शुद्धोदकस्नानम्०॥नाममन्त्रैःपूर्ववत्पूजां कुर्यात्॥पुरुरुसूक्तेन अभिषेकः। तप्तकाञ्चनवर्णाभं कौशेयं च सुनिर्मितम् ॥ वस्त्रं गृहाण देवेश लक्ष्मीयुक्त नमोऽस्तु ते। तं यज्ञं०॥ वस्त्रम्०॥ वस्त्रानन्तरमाच-मनम् ॥ दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात् ॥ ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ॥

मन्त्रोंसे मधुस्नान करावे ॥ इक्षुदं०—और स्वादुः०—इन करके शक्कर और पवित्र जलसे स्नान करावे ॥ नाम-मन्त्रोंसे पहली ही रीतिसे नामपूजा करे ॥ पुरुषसूक्तसे अभिषेक करे॥ तप्तकाञ्चन०-और तं यज्ञं०-इनसे वस्त्र दे।

वस्त्र देकर आचमन करावे । दामोदर०—और तस्माद्यज्ञात्स०—इनसे यज्ञोपवीत दे, जनेऊ देकर आचमन द ॥ श्रीखंडं०—और तस्मा०—इनसे चन्दन चढ़ावे ॥ अक्षतां०—इससे चावल चढावे ॥ माल्यादीनि०—और

तस्माद्यज्ञा० ॥ यज्ञोप० ॥ यज्ञोपवीतानन्तरमाचनीयम् ॥ श्रीखण्डं० ॥ तस्माद्यज्ञात्सर्वहुतः० चन्दनं सम०॥ अक्षतांश्च सु० ॥ अक्षतान्०॥ माल्यादीनि सुगन्धीनि० तस्मादश्वा०॥ पुष्पाणि०॥ अथ ग्रन्थिपूजा ॥ श्रियै० ॥ मोहिन्यै०॥ पद्मिन्यै० ॥ महाबलायै० ॥ अजायै० ॥ मङ्गलायै० ॥ वरदायै० ॥ शुभायै० ॥ जयायै०॥ विजयायै० ॥ जयन्त्यै नमः ॥ पापनाशिन्यै०॥ विश्वरूपायै०॥ सर्वमङ्गलायै० ॥ १४ ॥ इति ग्रन्थिपूजा ॥ अथाङ्गपूजा ॥ मत्स्याय नमः पादौ पूजयामि॥कूर्माय न० गुल्फौ पू० ॥ वराहाय० जानुनी० ॥नारसिंहाय० ऊरू पू० ॥ वामनाय० कटिं पू०॥ रामाय० उदरं पूजयामि ॥ श्रीरामाय० हृदयं पू० ॥ कृष्णाय० मुखं पू० ॥ सहस्रशिरसे०

तस्मा०—इनसे फूल चढावे ॥ अब गांठोंको पूजे ॥ श्रियै०—यहांसे लेकर सर्वमंगलायै यहां तक ग्रन्थिपूजा मूलमें देखकर करलेनी चाहिये ॥ इति ग्रन्थिपूजा ॥ फिर अंगपूजा करे ॥ मत्स्याय०—यहांसे

लेकर श्रीमद०—यहांतक सब अंगकी पूजा मूलमें ही देखकर कर ले ॥ अब आवरणकी पूजा करे ॥ अन

शिरः पू० ॥ श्रीमदनन्ताय० सर्वाङ्गं पू० ॥ अथावरणपूजा ॥ अनन्तस्य दक्षिणपार्श्वे रमायै० ॥ वामपार्श्वे भूम्यै० इति प्रथमावरणम् ॥ १ ॥ आवरणदेवतामावाह्य हस्तं प्रक्षाल्य गन्धपुष्पं तर्जनीमध्यमाङ्गुष्ठैर्धृत्वा मध्ये शङ्खोदकं गृहीत्वा मन्त्रान्ते शङ्खोदकं भूमौ निक्षिप्य पुष्पं देवोपरि निक्षिपेत् ॥ दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ इति मन्त्रमुच्चार्य जलं त्यक्त्वा पुष्पं देवोपरि न्यसेत् ॥ एवमग्रेऽपि ॥ १ ॥ पूर्वादिक्रमेण ॥ क्रुद्धोल्काय नमः ॥ महोल्काय० ॥ शतोल्काय० ॥ सहस्रोल्काय० ॥ दयाब्धे० ॥ द्वितीयावरणार्चनम् ॥ २ ॥ तथैव वासुदेवाय० ॥ संकर्षणाय० ॥ प्रद्युम्नाय० ॥ अनिरुद्धाय० ॥ दयाब्धे० ॥ तृतीयावरणार्चनम् ॥ ३ ॥ प्राच्यादौ—केशवाय० ॥ नारायणाय० ॥ माधवा० ॥ गोविन्दा० ॥ मधुसूदनाय० ॥ त्रिविक्रमाय० ॥ वामनाय० ॥ श्रीधराय० ॥ हृषीकेशाय० ॥ पद्मनाभाय० ॥ दामोदराय० ॥

न्तस्य०—यहां से लेकर और दयाब्धे०—इस मन्त्रतक पांचों आवरणकी पूजा मूलमें देखकर यथाक्रम कर

लेनी ॥ पूर्वादि क्रमकरके अनन्ताय०—इत्यादिक मन्त्रोंकरके दयाब्धे०—यहांतकके मन्त्रोंसे मूलमें देखकर



दयाब्धे० ॥ चतुर्थावरणार्चनम् ॥ ४ ॥ पूर्वादिक्रमेण ॥ मत्स्याय नमः ॥ कूर्माय नमः ॥ वराहाय नमः॥ नारसिंहाय नमः॥वामनाय नमः॥ परशुरामाय नमः॥श्रीरामायनमः॥ कृष्णाय नमः॥ बौद्धाय नमः ॥ कल्किने नमः ॥ अनन्ताय नमः ॥ विश्वरूपिणे नमः ॥ दयाब्धे० ॥ पञ्चमावरणार्चनम् ॥५॥ पूर्वादिक्रमेण॥अनन्ताय नमः॥ दक्षिणायां ब्रह्मणे नमः ॥ पश्चिमायां वायवे नमः ॥ उत्तरायाम् ईशानाय नमः ॥ आग्नेय्यां वारुण्यै नमः ॥ नैर्ऋत्यां गायत्र्यै नमः ॥ वायव्यां भारत्यै नमः ॥ ऐशान्यां गिरिजायै नमः ॥ अग्रे गरुडाय नमः ॥ वामे सुपुण्याय नमः ॥ दयाब्धे त्राहि० ॥ षष्ठमावरणार्चनम् ॥ ६ ॥ पूर्वादिक्रमेण ॥ इन्द्राय नमः॥ अग्नये नमः॥ यमाय नमः॥ निर्ऋतये नमः॥ वरुणाय नमः ॥ वायवे नमः ॥ सोमाय नमः ॥ ईशानाय नमः ॥ दयाब्धे० ॥ सप्तमावर० ॥ ७ ॥ आग्नेय्यां शेषाय नमः॥ नैर्ऋत्यां विष्णवे नमः ॥ वायव्यां विधये नमः॥ ऐशान्यां प्रजापतये नमः ॥ दयाब्धे त्राहि० ॥ अष्टमावरणार्चनम् ॥ ८ ॥ आग्नेय्यां गणपतये नमः ॥ नैर्ऋत्यां सप्तमातृभ्यो

नमः ॥ वायव्यां दुर्गायै नमः ॥ ऐशान्यां क्षेत्राधिपतये नमः ॥ दयाब्धे ॥ नवमावरणार्च० ॥ ९ ॥
मध्ये ब्रह्मणे नमः ॥ भास्कराय नमः ॥ शेषाय नमः ॥ सर्वव्यापिने नमः ॥ ईश्वराय नमः ॥ विश्व
रूपाय नमः ॥ महाकायाय नमः ॥ सृष्टिकर्त्रे नमः॥ कृष्णाय नमः॥ हरये नमः ॥ शिवाय नमः ॥
स्थितिकारकाय नमः ॥ अन्तकाय नमः ॥ दयाब्धे त्राहि सं० ॥ दशमावरणार्चनम् ॥ १० ॥
शौरये नमः ॥ वैकुण्ठाय नमः ॥ महाबलाय नमः ॥ पुरुषोत्तमाय नमः ॥ अजाय नमः ॥ पद्म-
नाभाय नमः ॥ मङ्गलाय नमः ॥ हृषीकेशाय नमः ॥ वरदाय नमः॥ माधवाय नमः॥ मधुसूदनाय
नमः ॥ अच्युताय नमः ॥ अनन्ताय नमः ॥ गोविन्दाय नमः॥ विजयाय नमः॥ अपराजिताय नमः॥
कृष्णाय नमः ॥ दयाब्धे त्राहि सं० ॥ एकादशावरणार्चनम् ॥ ११ ॥ अनन्ताय नमः ॥ कपिलाय
नमः ॥ शेषाय नमः ॥ संकर्षणाय नमः ॥ हलायुधाय नमः ॥ तारणाय नमः ॥ सीरपाणये नमः ॥
बलभद्राय नमः ॥ दयाब्धे त्राहि सं० ॥ द्वादशावरणार्चनम् ॥ १२ ॥ क्षीराब्धिशायिने नमः ॥
अच्युताय नमः ॥ भूम्याधाराय नमः ॥ लोकनाथाय नमः ॥ फणामणिविभूषणाय नमः ॥ सहस्र-

चौदह आवरणोंकी पूजा यथाक्रमसे कर लेनी योग्य है ॥ अब फिर पत्रपूजा करे ॥ कृष्णाय नमः यहांसे

मूर्ध्ने न० ॥ सहस्रार्चिषे न० ॥ दयाब्धे त्राहि सं० ॥ त्रयोदशावरणार्चनम् ॥ १३ ॥ केशवादि-
चतुर्विंशतिनामाभिः ॥ दयाब्धे त्राहि संसा० ॥ चतुर्दशावरणार्चनम् ॥ १४ ॥ अथ पत्रपूजा ॥
कृष्णाय नमः ॥ पलाशपत्रं समर्पयामि ॥ विष्णवे नमः ॥ औदुम्बरपत्रं० ॥ हरये नमः ॥
अश्वत्थपत्रं समर्पयामि ॥ शम्भवे नमः ॥ भृङ्गराजपत्रं समर्पयामि ॥ ब्रह्मणे नमः ॥
जटाधारपत्रं समर्पयामि ॥ भास्कराय नमः ॥ अशोकपत्रं समर्पयामि ॥ शेषाय नमः ॥
कपित्थपत्रं समर्पयामि ॥ सर्वव्यापिने नमः ॥ वटपत्रं समर्पयामि ॥ ईश्वराय नमः ॥ आम्र-
पत्रं समर्पयामि ॥ विश्वरूपिणे नमः ॥ कदलीपत्रं समर्पयामि ॥ महाकायाय नमः ॥ अपामा
र्गपत्रं समर्पयामि ॥ सृष्टिकर्त्रे न० ॥ करवीरपत्रं समर्पयामि ॥ स्थितिकर्त्रे नमः ॥ पुन्नागपत्रं
समर्पयासि ॥ अन्तकाय नमः॥ नागवल्लीपत्रं समर्पयामि ॥ अथ पुष्पपूजा ॥ अनन्ताय नमः ॥

लेकर अन्तकाय०—तक पत्र पूजे ॥ फिर पुष्पोंकी पूजा करे ॥ अनन्ताय०—यहांसे लेकर

अन्तकाय०—यहांतक पुष्पपूजा करके फिर एक सौ आठ (१०८) नामोंकी पूजा करे ॥ अनन्ताय नमः पद्मपुष्पं समर्पयामि ॥ विष्णवे नमः ॥ जातीपुष्पं समर्पयामि ॥ अव्ययाय नमः ॥ कह्लारपुष्पं समर्पयामि ॥ सहस्रजिते नमः ॥ केतकीपुष्पं समर्पयामि ॥ अनन्तरूपिणे नमः ॥ बकुलपुष्पं समर्पयामि ॥ इष्टाय नमः॥ शतपुष्पं समर्पयामि ॥ विशिष्टाय नमः ॥ पुन्नागपुष्पं सम० ॥ शिष्टेष्टाय नमः ॥ करवीरपुष्पं स० ॥ शिखण्डिने० ॥ धत्तूरपुष्पं सम० ॥ नहुषाय नमः ॥ कुन्दपुष्पं समर्पयामि ॥ विश्वबाहवे नमः ॥ मल्लिकापु० ॥ महीधराय नमः ॥ मालतीपुष्पं समर्पयामि ॥ अच्युताय नमः ॥ कार्णिकारपुष्पं समर्पयामि ॥ अन्तकाय नमः ॥ कदलीपुष्पं समर्पयामि ॥१४॥ अथाष्टोत्तरशतनामभिः पूजयेत् ॥ अनन्ताय नमः ॥ अच्युताय नमः ॥ अद्भुतकर्मणे नमः ॥ अमितविक्रमाय नमः ॥ अपराजिताय नमः॥ अखण्डाय नमः ॥ आग्निनेत्राय नमः ॥ अग्निवपुषे नमः ॥ अदृश्याय नमः ॥ अत्रिपुत्राय नमः ॥ १० ॥ अनन्तकुलाय नमः ॥ अनाशिने नमः ॥ अनघाय

यहांसे लेकर अव्यक्ताय नमः, अनन्ताय नमः यहांतक एक सौ आठ नामोंकी पूजा मूलमें देखकर

नमः ॥ अब्दनीलाय नमः । अहरहाय नमः ॥ अष्टमूर्तये नमः ॥ आनिरुद्धाय नमः ॥ आनिर्विघ्नाय नमः॥ अचञ्चलाय नमः ॥ शब्दातिगाय नमः ॥ २० ॥ अचलरूपाय नमः॥ अखिलधराय नमः ॥ अव्यक्ताय नमः॥ अनुरूपाय नमः ॥ अभयङ्कराय नमः ॥ अक्षताय नमः ॥ अवपुषे नमः॥अयोनिजाय नमः॥ अरविन्दाय नमः ॥ अज्ञानवर्जिताय नमः ॥ ३० ॥ अधोक्षजाय नमः ॥ आदितिपुत्राय नमः ॥ अम्बिकापतिपूर्वजाय नमः ॥ अपस्मारनाशिने नमः ॥ अव्ययाय नमः ॥ अनादये नमः ॥ अप्रमेयाय नमः ॥ अघशत्रवे नमः ॥ अमरारिघ्नाय नमः ॥ अनीश्वराय नमः ॥ ४० ॥ अजाय नमः ॥ अघोराय नमः ॥ अनादिनिधनाय नमः ॥अमरप्रभवे नमः॥ अग्राह्याय नमः॥ अक्रूराय नमः ॥ अनुत्तमाय नमः ॥ अरूपाय नमः ॥ अर्हे नमः ॥ अमोघाधिपतये नमः ॥ ५० ॥ अजाय नमः॥ अक्षताय नमः॥ अमृताय नमः॥ अघोरवीर्याय नमः॥ अव्यङ्गाय नमः ॥ आविघ्नाय नमः ॥ अतीन्द्रियाय नमः ॥ अमिततेजसे नमः ॥ अमितये नमः ॥ अष्टमूर्तये नमः ॥६०॥ अनिलाय नमः ॥ अवशाय नमः ॥ अणोरणीयसे नमः॥ अशोकाय नमः ॥ अरविन्दाक्षाय नमः॥ अधिष्ठानाय नमः ॥ अमितनयनाय नमः॥ अरण्यवासिने नमः॥ अप्रमत्ताय नमः॥ अनन्तरूपाय० ॥७०॥

अनलाय नमः ॥ अनिमिषाय नमः ॥ अब्ररूपाय नमः ॥ अग्रगण्याय नमः ॥ अप्रमिताय नमः ॥ अनन्तकाय नमः ॥ अचिन्त्याय नमः ॥ अपांनिधये नमः ॥ अतिसुन्दराय नमः ॥ अमरप्रियाय नमः ॥ ८० ॥ अष्टसिद्धिप्रदाय नमः ॥ अरविन्दप्रियाय नमः ॥ अरविन्दाय नमः ॥ अनयाय नमः ॥ अर्थाय नमः ॥ अक्षोभ्याय नमः ॥ अर्चिष्मते नमः ॥ अनेकमूर्तये नमः॥ अनन्तब्रह्माण्डपतये नमः ॥ अनन्तशयनाय नमः ॥ ९० ॥ अमराधिपतये नमः॥ अनाधाराय नमः॥ अनन्तनाम्ने नमः ॥ अनन्तश्रियै नमः ॥ अक्षराय नमः ॥ अमायाय नमः ॥ आश्रमस्थानाय नमः ॥ आश्रमातीताय नमः ॥ अन्नदाय नमः ॥ आत्मयोनये नमः ॥ १०० ॥ अवनीपतये नमः ॥ अवनीधराय नमः ॥ अनादये नमः ॥ आदित्याय नमः ॥ अमृताय नमः ॥ अपवर्गप्रदाय नमः॥ अव्यक्ताय नमः ॥ अनन्ताय नमः ॥ १०८ ॥ इत्यष्टोत्तरशतनामपूजा ॥ दशाङ्गं गुग्गुलूद्भूतं चन्दनागुरुसंयुतम् ॥ सर्वेषामुत्तमं धूपं गृहाण सुरपूजित ॥ यत्पुरुषं० धूप० साज्यं च वर्तिसंयुक्तं वह्निना

करनी उचित है ॥ यहां अष्टोत्तरशत नाम पूजा समाप्त हो गई ॥ दशाङ्गं०—और यत्पुरुषं०—इनसे धूप दे ॥

साज्यं०—और ब्राह्मणो०—इनसे दीप दे॥ अन्नं०—और चन्द्रमा०—इनसे मिष्टान्न दे॥ नैवेद्य०—ओर उत्तरा०—





योजितं मया॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापह॥ ब्राह्मणोऽस्य० दीपं०॥ अन्नं चतुर्विधं स्वादु पयोदधिघृतैर्युतम्॥ नानाव्यञ्जनशोभाढ्यं नैवेद्यं प्रतिगृह्यताम्॥चन्द्रमा मनसो० नैवेद्यं०॥ नैवेद्यमध्ये पानीयं०॥ उत्तरापोशनार्थं ते दद्मि तोयं सुवासितम्॥ गृहाण सुमुखो भूत्वा अनन्ताय नमो नमः॥उत्तरापोशनम्०॥ मुखप्रक्षालनम्०॥ हस्तप्रक्षालनम्०॥ करोद्वर्तनकं देव मया दत्तं हि भक्तितः॥ चारुचन्द्रप्रभं दिव्यं गृहाण जगदीश्वर॥ करोद्वर्तनम्०॥ इदं फलं मया देव स्थापितं पुरतस्तव॥ तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि॥ नारिकेलफलम्०॥ पूगीफलं महद्दिव्यं नाग वल्ल्या दलैर्युतम्॥ कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम्॥ ताम्बूलं स०॥ हिरण्यगर्भेति दक्षि-णाम्॥ यानि कानि च पापानि जन्मान्तरकृतानि च॥ तानि तानि विनश्यन्ति प्रदक्षिणपदेपदे॥



इनसे परोस दे॥ मुख धुलावे॥ हाथ धुलावे॥ करोद्व०—इससे हाथ साफकर दे॥ इदं फलं०—इससे नारियल चढ़ावे॥ पूगीफलं०—इससे पान सुपारी चढ़ावे॥ हिरण्य०—इससे दक्षिणा चढ़ावे॥ यानि कानि०—और

नाभ्या०—इनसे प्रदक्षिणा करे ॥ नमस्ते०—और नमस्ते देवदेवेश०—इनसे नमस्कार करे ॥ यज्ञेन०—इस मन्त्रसे पुष्प चढ़ावे अब डोरेकी प्रार्थना करे ॥ अनन्ताय—और अनन्तः कामदः०—इत्यादि मन्त्रोंसे डोरेकी प्रार्थना

नाभ्या आसीदिति प्रदक्षिणाम्० ॥ नमस्ते भगवन्भूयो नमस्ते धरणीधर ॥ नमस्ते सर्वनागेन्द्र नमस्ते मधुसूदन ॥ सप्तास्येति नमस्कारम्० ॥ नमस्ते देवदेवेश नमस्ते गरुडध्वज ॥ नमस्ते कमलाकान्त अनन्ताय नमो नमः ॥ यज्ञेन यज्ञमिति मन्त्रपुष्पम्० ॥ अथ दोरकप्रार्थना ॥ अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः ॥ नमोऽस्तु पद्मनाभाय नागानां पतये नमः ॥अनन्तः कामदः कामाननन्तो मे प्रयच्छतु ॥ अनन्तो दोररूपेण पुत्रपौत्रान् प्रवर्धतु ॥ इति प्रार्थ्य दोरकं गृहीत्वा ॥ अथ दोरकबन्धनमन्त्रः ॥ अनन्त संसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव । अनन्तरूपं विनियोजयस्व ह्यनन्तसूत्राय नमो नमस्ते ॥ इति बध्नीयात् ॥ जीर्णदोरकविसर्जनमन्त्रः ॥ नमः सर्वहितानन्त जगदानन्दकारक ॥ जीर्णदोरममुं देव विसृजेऽहं त्वदाज्ञया ॥ इति विसृजेत् ॥

कर डोरेको हाथमें लेकर अनन्त संसार०—इस मन्त्रसे डोरेको हाथमें बांध ले जीर्णदोरक०—इस मन्त्रसे पुराने

अनन्तके डोरेको खोल डाले ॥ गृहाणेदं०—और पक्कान्न०—इन दो मन्त्रोंसे श्रेष्ठ ब्राह्मणको वायन देवे ॥ अनन्तः०—इस मन्त्रसे जीर्ण डोरेकोभी दे देवे फिर यथाशक्ति ब्राह्मणोंको जिमावे ॥ इस कर्मके करनेसे अनन्त

अथ वायनमन्त्रः ॥ गृहाणेदं द्विजश्रेष्ठ वायनं दक्षिणायुतम्॥ त्वत्प्रसादादहं देव मुच्येयं कर्मबन्धनात् ॥ प्रतिगृह्णन्द्विजश्रेष्ठ अनन्तफलदायक ॥ पक्कान्नफलसंयुक्तं दक्षिणाघृतसंयुतम् ॥ वायनं द्विजवर्याय दास्यामि व्रतपूर्तये ॥ अथ जीर्णदोरकदानमन्त्रः ॥ अनन्तः प्रतिगृह्णाति अनन्तो वै ददाति च ॥ अनन्तस्तारकोभाभ्यामनन्ताय नमो नमः ॥ इति दद्यात् ॥ ततो यथाशक्ति ब्राह्मणान् भोजयेत् ॥ अनेन कृतपूजनेन श्रीमदनन्तः प्रीयताम् ॥ इति पूजाविधिः समाप्तः ॥

देव प्रसन्न होते हैं ॥ इति अनन्त पूजाविधिः ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥







अथ कथा—सूतजी बोले कि पहले गंगाजीके किनारे जरासन्धके मारनेके अर्थ धर्ममें तत्पर राजायुधिष्ठिरने राजसूययज्ञ प्रारम्भ किया और तबही ॥ १ ॥ श्रीकृष्णचन्द्र और भीम तथा अर्जुनके साथ राजा युधिष्ठिरने अनेक रत्नोंसे शोभित यज्ञशाला सजाई ॥ २ ॥ मोतियोंसे भरी हुई इन्द्रभवनके सदृश यज्ञशालाको

अथ कथा ॥ सूत उवाच ॥ पुरा तु जाह्नवीतीरे धर्मो धर्मपरायणः॥ जरासन्धवधार्थाय राजसूयमुपाक्रमत् ॥ १ ॥ कृष्णेन सह धर्मोऽसौ भीमार्जुनसमन्वितः ॥ यज्ञशालां प्रकुर्वीत नानारत्नोपशोभिताम् ॥ २ ॥ मुक्ताफलसमाकीर्णामिन्द्रालयसमप्रभाम् ॥ यज्ञार्थं भूपतीन् सर्वान् समानीय प्रयत्नतः ॥३॥ गान्धारीतनयो राजा तदानीं नृपनन्दनः ॥ दुर्योधन इति ख्यातः समागच्छन्मखालयम् ॥४॥ दृष्ट्वा दुर्योधनस्तत्र प्राङ्गणं जलसन्निभम् ॥ ऊर्ध्वं कृत्वा तु वस्त्राणि तत्रागच्छच्छनैः शनैः ॥ ५ ॥

बनाकर यज्ञके लिये सब राजाओंको बुलाया ॥ ३ ॥ उसी समय कुरुवंशोद्भव गांधारीके पुत्र राजा दुर्योधन उस यज्ञशालामें आये ॥ ४ ॥ वहां उस सभाके आंगनस्थलको जल समझकर वस्त्र ऊंचे कर राजा दुर्योधन होले

१ राजा युधिष्ठिर इनका सुयोधन नाम कहा करते थे।

होले चलने लगे ॥ ५ ॥ दुर्योधनकी स्थलमें जलको समान बुद्धि जानकर द्रौपदी आदि सब सुन्दर स्त्रियं हँसने लगीं फिर राजा दुर्योधन आगे चलकर जलमें स्थलकी भ्रान्तिसे मोहित हो जलमें गिर गये ॥ ६ ॥ फिर तौ राजा और तपोधन ऋषिलोग और द्रौपदी आदि सुन्दर नेत्रोंवाली सम्पूर्ण स्त्रियें हँसी करने लगीं ॥ ७ ॥ तब

स्मितवक्त्राश्च तं दृष्ट्वा द्रौपद्यादिवराङ्गनाः ॥ दुर्योधनस्ततो गच्छन् जलमध्ये पपात ह ॥ ६ ॥ पुनः सर्वे नृपाश्चैव ऋषयश्च तपोधनाः ॥ उपहासं च चक्रुस्ता द्रौपद्यादिसुलोचनाः ॥ ७ ॥ महाराजाधिराजोऽसौ महाक्रोधपरायणः ॥ विनिर्गतः स्वकं राष्ट्रं मातुलेन वृतो नृपः ॥ ८ ॥ तस्मिन् काले तु शकुनिः प्रोवाच मधुरं वचः ॥ मुञ्च राजन् महारोषं पुरतः कार्यगौरवात् ॥ ९ ॥ द्यूतोपक्रमणेनैव सर्वं राज्यमवाप्स्यसि ॥ गन्तुमुत्तिष्ठ राजेन्द्र सत्रस्य सदनं प्रति ॥ १० ॥

महाराजाधिराज दुर्योधन अत्यन्त क्रोधकर अपने मामाको संग ले वहांसे अपनी राजधानीको चले आये ॥ ८ ॥ उस समय शकुनि राजा दुर्योधनसे मधुर वचन बोला कि, हे राजन् ! आप अपने अगाडीके कार्य सिद्धिको समझकर क्रोध न कीजिये ॥ ९ ॥ आपको राज्य तौ द्यूत ( जुआ ) के खेलनेसे ही मिल जायगा

सो हे राजेन्द्र ! आप उठिये और यज्ञशालामें चलिये ॥ १० ॥ ऐसे कहकर राजा यज्ञभूमिको आये । यज्ञ पूरा होनेके पीछे सब राजालोग अपनी २ राजधानियोंको चले गये ॥ ११ ॥ तिसके पीछे राजा दुर्योधनने हस्तिनापुरमें आकर श्रेष्ठकर्म करनेवाले राजा युधिष्ठिर भीमसेन और अर्जुनको बुलाकर ॥ १२ ॥ जुएका

तथेत्युक्त्वा महाराजः समागच्छन्मखालयम् ॥ विनिवर्त्य मखं जग्मुर्नृपाः सर्वे स्वकं पुरम् ॥११ ॥
ततो दुर्योधनो राजा समागत्य गजाह्वयम् ॥ आनीय पाण्डुपुत्रांश्च धर्मभीमार्जुनान् वरान् ॥१२ ॥
द्यूतारम्भं चाकुरुत स्वं राज्यं प्राप्तवांस्ततः ॥ द्यूतेनैव जिताः सर्वे पाण्डवा वीतकल्मषाः ॥ १३ ॥
ततोऽरण्यान्तरे गत्वा वर्तन्त वनचारिणः ॥ ततो वृत्तान्तमाकर्ण्य भ्रातृभिः सह पाण्डवम् ॥ युधिष्ठिरं द्रष्टुमनाः कृष्णोऽगाज्जगदीश्वरः ॥ १४ ॥

खेल शुरू किया और पापरहित पाण्डवोंको जुएमें जीतकर सब राज्य ले लिया ॥ १३ ॥ तिसके पीछे पांडव वनमें जाकर वनचारी हो रहने लगे, भाइयोंसहित राजा युधिष्ठिरका वनवास सुनकर जगदीश्वर श्रीकृष्ण भगवान्

युधिष्ठिरको देखनेके अर्थ वनमें गये ॥ १४ ॥ सूतजी बोले वे दुःखसे दुर्बल हुए पांडव वनमें रहने लगे उस
समय महात्मा श्रीकृष्णचन्द्रको देखकर दुःखित पांडव प्रणाम करके बोले ॥ १५ ॥ राजा युधिष्ठिर बोले कि,
मैं भाइयोंसहित अत्यन्त दुःखी हूँ सो हे भगवन् ! मैं जैसे इस दुःखसागरसे छूटूँ सो आप कहिये ॥ १६ ॥ किस

सुत उवाच ॥ अरण्ये वर्तमानास्ते पाण्डवा दुःखकर्शिताः ॥ कृष्णं दृष्ट्वा महात्मानं प्रणिपत्य तमब्रुवन् ॥ १५ ॥ युधिष्ठिर उवाच ॥ अहं दुःखीह सञ्जातो भ्रातृभिः परिवारितः ॥ कथं मुक्ति-र्भवेदास्माकमनन्ताद्दुःखसागरात् ॥ १६ ॥ कं देवं पूजयिष्यामि राज्यं प्राप्स्याम्यनुत्तमम् ॥ अथवा किं व्रतं कुर्यां त्वत्प्रसादाद्भवेद्धितम् ॥ १७ ॥ श्रीकृष्ण उवाच ॥ अनन्तव्रतमस्त्येकं सर्वपापहरं शुभम् ॥ सर्वकामप्रदं नृणां स्त्रीणां चैव युधिष्ठिर ॥ १८ ॥

देवताके पूजन अथवा किस व्रतके करनेसे आपकी कृपासे उत्तम राज्यको पाऊँ सो आप शीघ्र मुझसे कहिये
॥ १७ ॥ श्रीकृष्णचन्द्र बोले कि, हे राजन् ! स्त्री पुरुषोंके पापोंका दूर करनेवाला अत्यंत शुभ एक अनन्त
व्रत है वह मनुष्य और स्त्रियोंको सब कामनाको देनेवाला है ॥ १८ ॥

यह उत्तम व्रत भादोंके महीनेकी शुक्ल चतुर्दशीके दिन होता है इस व्रतके करनेही मात्रसे प्राणी सम्पूर्ण पापोंसे छूट जाते हैं ॥ १९ ॥ राजा युधिष्ठिर बोले हे प्रभो! जिसको आप अनन्त कहते हैं यह कौन है क्या शेषनाग हैं या अनन्त तक्षक हैं ॥ २० ॥ या परमात्मा हैं अथवा ब्रह्म हैं यह अनन्त कौन हैं? सो हे केशव!

शुक्लपक्षे चतुर्दश्यां मासि भाद्र पदे भवेत्॥तस्यानुष्ठानमात्रेण सर्वपापं व्यपोहति॥१९॥ युधिष्ठिर उवाच ॥ कृष्ण कोऽयमन न्तेति प्रोच्यते यस्त्वया विभो ॥ किं शेषनाग आहोस्विदनन्तस्तक्षकः स्मृतः ॥२०॥ परमात्माऽथवाऽनन्त उताहो ब्रह्म गीयते॥क एषोऽनन्तसंज्ञो वै तथ्यं मे ब्रूहि केशव ॥२१॥कृष्ण उवाच॥ अनन्त इत्यहं पार्थ मम रूपं निबोध तत ॥आदित्यादिग्रहात्माऽसौ यः काल इति पठ्यते॥२२॥कलाकाष्ठामुहूर्तादिदिनरात्रिशरीरवान्॥पक्षमासर्तुवर्षादियुगकालव्यवस्थया॥२३॥

आप सत्य २ कहिये ॥ २१ ॥ श्रीकृष्ण बोले कि, हे पार्थ! यह अनन्त मैं ही हूँ मेरा ही रूप अनंतका जानो, यही सूर्यादि ग्रह और कालरूप[1] भी है ॥ २२ ॥ कला काष्ठा मुहूर्त दिन रात्री पक्ष महीना ऋतु वर्ष युग काल इस सबकी व्यवस्थासे है ॥ २३ ॥

१—अठारह वेर पलक लगनेसे एक काष्ठा, तीस काष्ठाकी एक कला, तीस कलाका एक क्षण, बारह क्षणका एक मुहूर्त, तीस मुहूर्तका—

जिस इस कालका मैंने वर्णन किया है इसको ही अनंत कहते हैं, वही मैंने भूमिका भार उतारनके अर्थ श्रीकृष्णरूपसे अवतार लिया है ॥ २४ ॥ हे पार्थ ! दैत्योंके नाशके लिये साधुजनोंके पालनार्थ वसुदेवके कुलमें

योऽयं कालो मयाख्यातः सोऽनन्त इति कीर्त्यते ॥ सोऽहं कृष्णोऽवतीर्णोऽत्र भूभारोत्तारणाय च ॥२४॥ दानवानां वधार्थाय वसुदेवकुलोद्भवम् ॥ मां विद्धि सततं पार्थ साधूनां पालनाय च ॥ २५ ॥ अनादिमध्यनिधनं कृष्णं विष्णुं हरिं शिवम् ॥ वैकुण्ठं भास्करं सोमं सर्वव्यापिनमीश्वरम् ॥ २६ ॥ विश्वरूपं महाकालं सृष्टिसंहारकारकम् ॥ २७ ॥

पैदा हुए अनंत देव मुझको जानो ॥ २५ ॥ आदि मध्य अन्त करके रहित कृष्ण और विष्णु इंद्र शिव वैकुण्ठ सूर्य चन्द्र और सर्वव्यापी ईश्वर ॥ २६ ॥ ऐसा विश्वरूप महाकालस्वरूप सृष्टिसंहारका करनेवाला ॥ २७ ॥

—एक दिन रात, पन्द्रह दिन रातका एक पक्ष, दो ( कृष्ण—शुक्ल ) पक्षका एक महीना, दो महीनोंकी एक ऋतु छः ऋतु (१२महींनों ) का एक वर्ष, सत्ययुग, त्रेता, द्वापर, कलियुग ये चार युग हैं इनकी आयु भिन्न भिन्न पुराणोंमें लिखी है। दोहा—" लव निमेष परिमाण युग, वर्ष कल्पशरचण्ड । भजसि न मन तेहि रामको; काल जासु कोदण्ड " ॥

अर्जुनके विश्वासके लिये योगिजन जिसका ध्यान करते हैं जिसमें चतुर्दश ( १४ ) इंद्र वास करते हैं, हे बड़ी भुजाओंवाले युधिष्ठिर ! ऐसा महारूप अर्जुनको मैंने दिखाया ॥ २८ ॥ जिसमें आठ वसु बारह सूर्य ग्यारह रुद्र सप्त ऋषि चारों समुद्र पर्वत नदियें और वृक्ष ॥ २९ ॥ नक्षत्र दिशा पृथ्वी पाताल भूर्भुवादि नीचेके और

प्रत्ययार्थं महारूपं फाल्गुनाय प्रदर्शितम् ॥ पूर्वमेव महाबाहो योगिध्येयमनुत्तमम् ॥ विश्वरूप मनन्तं च यस्मिन्निन्द्राश्चतुर्दश ॥ २८ ॥ वसवो द्वादशादित्या रुद्रा एकादश स्मृताः ॥ सप्तर्षयः समुद्राश्च पर्वताः सरितो द्रुमाः ॥ २९ ॥ नक्षत्राणि दिशो भूमिः पातालं भूर्भुवादिकम् ॥ मा कुरुष्वात्र सन्देहं सोऽहं पार्थ न संशयः ॥ ३० ॥ युधिष्ठिर उवाच ॥ अनन्तव्रतमाहात्म्यं विधिं वद विदां वर ॥ किं पुण्यं किं फलं चास्य किं दानं कस्य पूजनम् ॥ ३१ ॥

ऊपरके भी सात २ लोक यह सर्व मुझमें हैं वही अनन्तरूप मैं हूं । हे पार्थ ! इसमें कुछ सन्देह नहीं है ॥ ३० ॥ यह सुनकर राजा युधिष्ठिर बोले कि, हे जाननेवालोंमें श्रेष्ठ ! इस अनन्तव्रतके माहात्म्य और विधि तथा क्या इसका फल है, इसमें क्या दान दिया जाता है और किसका पूजन होता है यह आप बतलाइये ॥ ३१ ॥

किसने पहले इस व्रतका आचरण करके मृत्युलोकमें प्रकाश किया यह सब विस्तारपूर्वक अनन्तव्रतका वृत्तान्त मुझसे आप कहिये ॥ ३२ ॥ यह सुनकर श्रीकृष्ण बोले कि, पहले सत्ययुगमें वसिष्ठगोत्रमें पैदा हुए एक सुमन्तु नामवाले ऋषि हुए उन्हीं ऋषिने भृगुकी सुन्दर कन्या ॥ ३३ ॥ हे राजन् ! दीक्षा नामवालीका वेदोक्त विधिसे

केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् ॥ एवं सविस्तरं सर्वं ब्रूह्यनन्तव्रतं मम ॥३२॥ कृष्ण उवाच ॥ आसीत्पुरा कृतयुगे सुमन्तुर्नाम वै द्विजः ॥ वसिष्ठगोत्रसंभूतः सुरूपां च भृगोः सुताम् ॥ ३३ ॥ दीक्षानाम्नीं चोपयेमे वेदोक्तविधिना नृप ॥ तस्याः कालेन सञ्जाता दुहिताऽनन्तलक्षणा ॥ ३४ ॥ शीलानाम्नी सुशीला सा वर्धते पितृवेश्मनि ॥ माता च तस्याः कालेन ज्वरदाहेन पीडिता ॥३५॥ विनष्टा सा नदीतीरे ययौ स्वर्गं पतिव्रता ॥ सुमन्तुस्तु ततोऽन्यां वै धर्मपुंसः सुतां पुनः ॥३६॥

पाणिग्रहण करा थोडे दिनोंके पीछे उसके बहुत लक्षणसम्पन्न एक कन्या पैदा हुई ॥ ३४ ॥ सुन्दर स्वभाववाली शीला नामवाली वह कन्या पिताके घर बढने लगी इतनेहीमें उसकी माता ज्वरके दाहसे पीडित हो ॥ ३५ ॥ वह पतिव्रता नदीके किनारे मरकर स्वर्गको चली गई फिर सुमन्तुने धर्मपुंसऋषिकी कन्या ॥ ३६ ॥

दुःस्वभाववाली कठोर हृदयवाली अत्यन्त क्रोध करनेवाली दिनरात लड़ाई करनेवाली कर्कशा नामवालीके साथ और विवाह कर लिया ॥ ३७ ॥ वह शीला गृहपूजामें तत्पर पिताके घर शोभाको प्राप्त होती हुई दिवाल स्तम्भ बाहरके दरवाजे देहली तोरणादिकोंमें ॥ ३८ ॥ नील पीत श्वेत और काले रङ्गोंसे चित्र बनाकर

उपयेमे विधानेन कर्कशां नाम नामतः ॥ दुःशीलां कर्कशां चण्डीं नित्यं कलहकारिणीम् ॥ ३७ ॥ सापि शीला पितुर्गेहे गृहार्चनपरा बभौ ॥ कुड्यस्तम्भबहिर्द्वारदेहलीतोरणादिषु ॥ ३८ ॥ वर्णकै श्चित्रमकरोन्नीलपीतसितासितैः ॥ स्वस्तिकैः शङ्खपद्मैश्च अर्चयन्ती पुनः पुनः ॥ ३९ ॥ ततः काले बहुगते कौमारवशवर्त्तिनी ॥ एवं सा वर्धते शीला पितृवेश्मनि मङ्गला ॥४०॥ पित्रा दृष्टा तदा तेन स्त्रीचिह्ना यौवने स्थिता ॥ तां दृष्ट्वा चिन्तयामास वराननुगुणान् भुवि ॥ कस्मै देया मया कन्या विचार्येति सुदुःखितः ॥ ४१ ॥

माङ्गलिक शंख बजाकर कुसुमादिकोंसे वारंवार पूजा करती ॥ ३९ ॥ थोडे दिनों पीछे मङ्गलरूप युवा अवस्थावाली यह शीला कन्या पिताके घर वृद्धिको प्राप्त होती हुई ॥ ४० ॥ उस कन्याको युवती स्त्रीके चिह्नोंसे

सम्पन्न उसके पिता सुमन्तुने देखा, देखकर कौन इसके अनुसार पृथ्वीमें वर है और यह कन्या किसको दूं ऐसा दुःखित होकर विचारने लगा ॥ ४१ ॥ उसी समय वेद जाननेवालोंमें श्रेष्ठ मुनियोंमें श्रेष्ठ कन्याको मांगनेकी इच्छा करनेवाले सुन्दर मुनि श्रेष्ठ कौण्डिन्य आये ॥ ४२ ॥ और बोले कि, रूपसम्पन्न इस तुम्हारी

एतस्मिन्नेव काले तु मुनिर्वेदविदांवरः ॥ कन्यार्थी चागतः श्रीमान् कौण्डिन्यो मुनिसत्तमः ॥ ४२॥
उवाच रूपसम्पन्नां त्वदीयां तनयां वृणे ॥ पिता ददौ द्विजेन्द्राय कौण्डिन्याय शुभे दिने ॥ ४३ ॥
गृह्योक्तविधिना पार्थ विवाहमकरोत्तदा ॥ मङ्गलाचारनिर्घोषं तत्र कुर्वन्ति योषितः ॥ ४४ ॥
ब्राह्मणाः स्वस्तिवचनं जयघोषं च बन्दिनः ॥ निर्वर्त्यौद्वाहिकं सर्वं प्रोक्तवान् कर्कशां द्विजः॥४५॥

कन्याके साथ हम विवाह करते हैं, यह सुन शीलाके पिताने अच्छे दिन ब्राह्मणोंमें श्रेष्ठ कौण्डिन्यके साथ ॥ ४३ ॥ हे पार्थ ! शास्त्रोक्तविधिसे शीलाका विवाह कर दिया उस समय वहां स्त्रियें मंगलगान करने लगीं ॥ ४४ ॥ ब्राह्मण स्वस्तिवाचन करने लगे । बन्दीजन जयशब्दकरने लगे । सुमन्तु सब कार्यको कर अपनी

कर्कशा स्त्रीसे बोले ॥ ४५ ॥ सुमंतु बोला कि, हे प्रिये ! जामाता ( जमाई ) के लिये क्या कुछ दायज देना चाहिये ? यह सुनकर कर्कशाने क्रोध कर सब घरकी सुन्दर चीजोंको निकाल कर ॥४६॥ खूब बांधकर और पिटारेमें धरकर भोजनसे बाकी बचे भोजनको रास्तेके लिये देकर जामातासे बोली कि अब तुम अपने घर

सुमन्तुरुवाच ॥ किंचिद्दायादिकं देयं जामातुः पारितोषिकम् ॥ तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्सार्य गृहमण्डनम् ॥ ४६ ॥ पेटके सुस्थिरं बद्धा स्वगृहं गम्यतामिति ॥ भोज्यावशिष्टचूर्णेन पाथेयं च चकार सा ॥ ४७ ॥ उवाच वित्तं नैवास्ति गृहे पश्य यदि स्थितम् ॥ तच्छ्रुत्वा विमनाः पार्थ संयतात्मा मुनिस्तदा ॥ ४८ ॥ कौण्डिन्योऽपि विवाह्यैनां पथि गच्छन् शनैः शनैः ॥ शीलां सुशीलामादाय नवोढां गोरथेन हि ॥ ४९ ॥

चले जाओ ॥ ४७ ॥ और यह भी कहा देख लो घरमें कुछ भी द्रव्य नहीं है । हे राजन् ! यह सुनकर मनमें दुःखी होते हुए आत्मज्ञानी मुनिराज ॥ ४८ ॥ कौण्डिन्यभी सुन्दरस्वभाववाली शीलाका विवाह कर बैलगाडीमें

बैठकर धीरे २ रास्तेमें आये ॥ ४९ ॥ पवित्र यमुनाको देखकर उसके किनारेमें रथको खडा कर उस रथेमेंसे शीलाको उतार शिष्योंको वहां बैठाकर कौण्डिन्य नित्यकृत्य करनेको चले गये ॥ ५० ॥ दुपहरके भोजन करनेके समय नदीके किनारे रथसे उतर शीलाने लाल वस्त्र धारण करे हुए स्त्रियोंके समूहको देखा ॥ ५१ ॥

दद‍र्श यमुनां पुण्यां तामुत्तीर्य तटे रथम् ॥ संस्थाप्यावश्यकं कर्तुं गतः शिष्यान्नियुज्य वै ॥ ५० ॥
मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे ॥ ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥ ५१ ॥
चतुर्दश्यामर्चयन्तं भक्त्या देवं जनार्दनम् ॥ उपगम्य शनैः शीला पप्रच्छ स्त्रीकदम्बकम् ॥ ५२ ॥
आर्याः किमेतन्मे ब्रूत किन्नाम व्रतमीदृशम् ॥ ता ऊचुर्योषितस्तां तु शीलां शीलविभूषणाम्
॥ ५३ ॥ अनन्तव्रतमेतद्धि व्रतेऽनन्तस्तु पूज्यते ॥ साऽब्रवीदहमप्येतत्करिष्ये व्रतमुत्तमम् ॥५४॥

भक्तिकरके चतुर्दशीके दिन विष्णु भगवान्‌की पूजा करते हुए स्त्रियोंके समीप शीलाने धीरे धीरे जाकर पूछा ॥ ५२ ॥ शीला बोली, हे सौभाग्यवतियो ! कहो तो इस व्रतका क्या नाम है ? यह सुनकर, वे स्त्रियें शीलही है भूषण जिसका ऐसी शीलासे बोलीं ॥ ५३ ॥ यह अनन्तका व्रत है, इस व्रतमें अनन्तदेवका पूजन

होता है यह सुनकर शीला बोली इस उत्तम व्रतको मैं भी करूंगी ॥ ५४ ॥ और इस व्रतकी क्या विधि है और क्या दान दिया जाता है और किस देवताकी पूजा होती है ? यह सुन स्त्रियें बोलीं—हे शीले ! एक सेर सुन्दर सामेके चावल अच्छी पवित्रतासे बनाकर ॥ ५५ ॥ उसमेंसे आधा तो ब्राह्मणको दे दे और आधा आप

विधानं कीदृशं तत्र किं दानं कोऽत्र पूज्यते ॥ स्त्रिय ऊचुः ॥ शीले सदन्नप्रस्थस्य पुंनाम्ना संस्कृतस्य च ॥ ५५ ॥ अर्धं विप्राय दातव्यमर्धमात्मनि भोजनम् ॥ शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः ॥ ५६ ॥ कर्तव्यं च सरित्तीरे सदाऽनन्तस्य पूजनम् ॥ शेषं कुशमयं कृत्वा वंशपात्रे निधाय च ॥ ५७ ॥ स्नात्वाऽनन्तं समभ्यर्च्य मण्डले गन्धदीपकैः ॥ पुष्पैर्धूपैश्च नैवेद्यैर्नानापक्वान्नसंयुतैः ॥ ५८ ॥

खा ले, धनकी शठताको छोडकर अपनी शक्त्यनुसार दक्षिणा दे ॥ ५६ ॥ अनन्तदेवका पूजन सदा नदीके किनारेपर करना चाहिये, कुशाके शेषजी बनाकर वंशपात्र ( बांसकी टोकरी ) में स्थापित करे ॥ ५७ ॥ स्नान करके और दीपक सुगन्धित पुष्प धूप मिष्टान्न अनेक अनेक पक्के फलोंसे अनन्तदेवका पूजन करे ॥ ५८ ॥

उसके समीप चौदह ( १४ ) गांठोंवाले मजबूत लाल डोरेको रखकर शुभ मन्त्रोंसे पूजन करके फिर, पुरुषोंके दक्षिण ( दाहिने ) और स्त्रियोंके बायें हाथमें बांध दे ॥ ५९ ॥ हे वासुदेव ! अनन्त संसाररूपी इस समुद्रसे मुझ डूबते हुएको तुम उद्धार करो अनन्तरूप होकर इस डोरेमें प्रवेश हो ऐसे अनन्तरूप इस सूत्र ( डोरा ) के

तस्याग्रतो दृढं न्यस्य कुङ्कुमाक्तं सुदोरकम् ॥ चतुर्दशग्रन्थियुतं गन्धाद्यैरर्चयेच्छुभैः ॥ ततस्तु दक्षिणे पुंसां स्त्रीणां वामे करे न्यसेत् ॥ ५९ ॥ अनन्त संसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव ॥ अनन्तरूपे विनियोजयस्व ह्यनन्तसूत्राय नमो नमस्ते ॥ ६० ॥ अनेन दोरकं बद्धा कथां श्रुत्वा हरेरिमाम् ॥ ध्यात्वा नारायणं देवमनन्तं विश्वरूपिणम् ॥ ६१ ॥ भुक्त्वा चान्ते व्रजेद्वेश्म भद्रे प्रोक्तं व्रतं तव ॥ कृष्ण उवाच ॥ एवमाकर्ण्य राजेन्द्र प्रहृष्टेनान्तरात्मना ॥ ६२ ॥

अर्थ नमस्कार है ॥ ६० ॥ इस मन्त्रसे अनंतका पूजन कर वह डोरा हाथमें बांध ले और विष्णुभगवान्‌की पवित्र कथाको सुनकर और अनंतस्वरूप विष्णुभगवान्‌का ध्यान करता हुआ ॥ ६१ ॥ पीछेसे भोजन कर अपने घरको चला जाय । हे सुभगे ! यह अनंतके व्रतकी विधि है । इस तरह स्त्रियोंकी कथाको सुनाकर

श्रीकृष्ण बोले हे नृपसत्तम युधिष्ठिर ! इस प्रकार व्रतकी विधिको सुन प्रसन्नचित्त होकर ॥ ६२ ॥ उस शीलान भी व्रतको करके हाथमें डोरा बांधा और उस रास्तेके भोजनमेंसे आधा ब्राह्मणको देकर आपभी खाकर ॥ ६३ ॥ फिर प्रसन्न होती हुई बैलगाडीमें बैठ अपने पतिके साथ घरको गमन किया तभीसे उसे स्वामीके

साऽपि चक्रे व्रतं शीला करे बद्ध्वा सुदोरकम् ॥ पाथेयमर्धं विप्राय दत्त्वा भुक्त्वा स्वयं ततः॥६३॥
पुनर्जगाम सा हृष्टा गोरथेन स्वकं गृहम् ॥ भर्त्रा सहैव शनकैः प्रत्ययस्तत्क्षणादभूत् ॥ ६४ ॥
तेनानन्तव्रतेनास्य बभौ गोधनसंकुलम् ॥ गृहाश्रमं श्रिया जुष्टं धनधान्यसमन्वितम् ॥ ६५ ॥
आकुलं व्याकुलं रम्यं सर्वदाऽतिथिपूजनैः ॥ साऽपि माणिक्यकाञ्चीभिर्मुक्ताहारैर्विभूषिता ॥६६॥
देवाङ्गनेव संपन्ना सावित्रीप्रतिमाऽभवत् ॥ विचचार गृहे भर्तुः समीपे सुखरूपिणी ॥ ६७ ॥

साथ ही विश्वास हो गया ॥ ६४ ॥ उस अनन्तव्रतके प्रभावसे इसका घर गौ लक्ष्मी और धन धान्यसे युक्त ॥ ६५ ॥ सदा अतिथियोंके पूजनसे भरा हुआ हो गया और वह शीला भी मणियोंकी तगडी पहरे मोतियोंके हारोंसे शोभित ॥ ६६ ॥ देवस्त्रियोंके समान रूपवाली सरस्वतीकी समान शोभित होती

हुई आनंद देनेवाला है स्वरूप जिसका ऐसी पतिके सामने घरमें विचरने लगी ॥ ६७ ॥ एक समय बैठी हुई उस शीलाके हाथमें बंधे हुए डोरेको देखकर उसका पति वह ब्राह्मण बोला ॥ ६८ ॥ हे शीले! यह डोरा कैसा है और तूने क्यों बांधा है क्या तूने मुझे अपने वशमें करनेको बांधा है, यह तू मुझे बताव॥६९॥

कदाचिदुपविष्टाया दृष्टो बद्धः स दोरकः ॥ शीलाया हस्तमूले तु भर्त्रा तस्या द्विजन्मना ॥ ६८ ॥ किमिदं दोरकं शीले मम वश्याय कल्पितम् ॥ धृतं सुदोरकं त्वेतत् किमर्थं ब्रूहि तत्त्वतः ॥ ६९ ॥ शीलोवाच ॥ यस्य प्रसादात्सकला धनधान्यादिसंपदः ॥ लभ्यन्ते मानवैश्चापि सोऽनन्तोऽयं मया धृतः ॥ ७० ॥ शीलायास्तद्वचः श्रुत्वा भर्त्रा तेन द्विजन्मना ॥ श्रीमदान्धेन कौरव्य साक्षेपं त्रोटितस्तदा ॥ ७१ ॥

यह सुनकर शीला बोली, हे स्वामिन्! जिसकी कृपासे धनधान्यादि सम्पत्ति मनुष्य पाते हैं उस अनंतदेवकी मैंने धारणा करी है ॥ ७० ॥ हे युधिष्ठिर! इस प्रकार शीलाके वचन सुनकर उस श्रीके मदसे अंधे हुए ब्राह्मणने उस डोरेको झटका देकर तोड डाला ॥ ७१ ॥ अनंत कौन होता है ऐसे उस मूर्ख पापीने कहकर प्रज्वलित

अग्निमें उस डोरेको डाल दिया ॥ ७२ ॥ हाय २ करके रोती हुई उस शीलाने दौडकर जलते हुए डोरेको आगसे निकाल दूधमें डाल दिया उस दुष्कर्मके करनेसे उसकी सब श्री नष्ट हो गई ॥ ७ ॥ गौ और धन तो चोरोंने चुरा लिया, घरमें आग लग गई जिस प्रकार आया था उसी प्रकार सबकुछ चला गया ॥ ७४ ॥ भाई और

कोऽनन्त इति मूढेन जल्पता पापकारिणा ॥ क्षिप्तो ज्वालाकुले वह्नौ हा हा कृत्वा प्रधावती ॥ ७२ ॥ शीला गृहीत्वा तत्सूत्रं क्षीरमध्ये समाक्षिपत् ॥ तेन कर्मविपाकेन सा श्रीस्तस्य क्षयं गता ॥ ७३ ॥ गोधनं तस्करैर्नीतं गृहं दग्धं धनं गतम् ॥ यद्यथैवागतं गेहे तत्तथैव पुनर्गतम् ॥७४॥ स्वजनैः कलहो नित्यं बन्धुभिस्ताडनं तथा ॥ अनन्ताक्षेपदोषेण दारिद्र्यं पतितं गृहे ॥७५॥ न कश्चिद्वदते लोकस्तेन सार्द्धं युधिष्ठिर ॥ शरीरेणातिसंतप्तो मनसाप्यतिदुःखितः ॥ ७६ ॥

जातिके आदमियोंसे रोज २ मार पीट और क्लेश लडाई होनें लगी अनंत तोडनेके दोषसे सभ दारिद्रता घरमें आ गई ॥ ७५ ॥ हे युधिष्ठिर ! कोई मनुष्य उसके साथ बातभी न करे तब वह ब्राह्मण मनसे और देहसे बडा

दुःखित होता हुआ ॥ ७६ ॥ अत्यंत पीडाको पाकर निर्वेद हो वह कौंडिन्य अपनी स्त्रीसे बोला हे प्रिये! यह दुःखका कारण अकस्मात्‌ही कहांसे इत्पन्न हो गया ॥ ७७ ॥ जिससे हम बहुत दुःखी होते हैं और सब धनभी नष्ट हो गया, भाई बन्धुओंसे घरमें रोज लडाई होती है और कोई मुझसे बोलता भी नहीं ॥ ७८॥

निर्वेदं परमं प्राप्तः कौण्डिन्यः प्राह तां प्रियाम् ॥ कौण्डिन्य उवाच ॥ शीले ममेदमुत्पन्नं सहसा शोककारणम् ॥ ७७॥ येनातिदुःखमस्माकं जातः सर्वधनक्षयः ॥ स्वजनैः कलहो गेहे न कश्चिन्मां प्रभाषते ॥ ७८ ॥ शरीरे नित्यसन्तापः खेदश्चेतसि दारुणः ॥ जानासि दुर्नयः कोऽत्र किं कृत्वा सुकृतं भवेत् ॥ ७९ ॥ प्रत्युवाचाथ तं शीला सुशीला शीलमण्डना ॥ शीलोवाच ॥ प्रायोऽनन्तकृताक्षेपपापसंभवजं फलम् ॥ ८० ॥

शरीरमें भी रोज संताप है चित्तमें अत्यंत खेद है तू कुछ जानती है कौनसे सुकृतसे इस दुःखका नाश होगा ॥ ७९ ॥ यह वचन सुनकर सुन्दरस्वभाववाली शीलसे मण्डित वह शीला बोली मैं जानती हूं कि,

यह अनन्तके तिरस्कार करनेके पापका फल हैं ॥ ८० ॥ सो हे महाभाग ! इस कारण आप इसका कुछ यत्न करिये यह सुनकर वह ब्राह्मण मनसे विष्णुका ध्यान करने लगा ॥ ८१ ॥ और निर्वेदको प्राप्त हो वनमें जाकर इंद्रियोंको जीत वायु भक्षण करता हुआ वह कौण्डिन्य तप करने लगा ॥ ८२ ॥ और उस सर्वव्यापी

भविष्यति महाभाग तदर्थं यत्नमाचर ॥ एव मुक्तः स विप्रर्षिर्जगाम मनसा हरिम् ॥ ८१ ॥
निर्वेदान्निर्जगामाथ कौण्डिन्यः प्रयतो वनम् ॥ तपसे कृतसंकल्पो वायुभक्षो द्विजोत्तमः ॥ ८२ ॥
मनसाध्याय चानन्तं क्व द्रक्ष्यामि च तं विभुम् ॥ यस्य प्रसादात्संजातमाक्षेपान्निधनं गतम् ॥ ८३ ॥
धनादिकं ममातीव सुखदुःखप्रदायकम् ॥ एवं सञ्चिन्तयन् सोऽथ बभ्राम गहने वने ॥ ८४ ॥
तत्रापश्यन्महाचूतं पुष्पितं फलितं द्रुमम् ॥ वर्जितं पक्षिसङ्घातैः कीटकोटिसमावृतम् ॥ ८५ ॥

भगवान्‌को कहां देखूं ऐसा विचार करने लगा, जिसकी कृपासे धनादिक सुखके देनेवाले बहुतसे पदार्थ आये और तिरस्कार करनेसे फिर चले गये इस प्रकार विचार करता हुआ उस बडे वनमें फिरने लगा ॥ ८३ ॥ ॥ ८४ ॥ उस वनमें बहुतसे फलफूलोंसे युक्त और पक्षियोंसे रहित और बहुत प्रकारके कीडोंसे लिपटे हुए बडे

भारी आमके वृक्षको देखा ॥ ८५॥ उस वृक्षको देख वह ब्राह्मण बोला, हे महावृक्षोंमें श्रेष्ठ! सौम्य! आपने कहीं अनन्तदेवको देखा हो तो बहुत शीघ्र बता दीजिये मेरे चित्तमें बडा भारी कष्ट है इस प्रकार उस ब्राह्मणने उस आमके वृक्षसे पूंछा ॥ ८६॥ यह सुनकर वह वृक्ष बोला हे ब्राह्मणोंमें श्रेष्ठ! मैंने अनंतको कहीं नहीं

तमपृच्छद् द्विजोऽनन्तः क्वचिद्दृष्टो महातरो ॥ ब्रूहि सौम्य ममातीव दुःखं चेतसि वर्तते ॥ ८६॥
सोऽब्रवीद्द्रुद्रु नानन्तः क्वचिद्दृष्टो मया द्विज ॥ एवं निराकृतस्तेन सञ्जगामाथ दुःखितः ॥ ८७॥
क्व द्रक्ष्यामीति गच्छन् स गामपश्यत्सवत्सकाम् ॥ वनमध्ये प्रधावन्तीमितश्चेतश्च पाण्डव ॥ ८८॥
सोऽब्रवीद्धेनुके ब्रूहि यद्यनन्तस्त्वयेक्षितः ॥ गौरुवाचाथ कौण्डिन्यं नानन्तं वेद्म्यहं द्विज ॥ ८९॥

देखा यह वार्ता सुनकर वह ब्राह्मण अत्यंत दुःखी होकर वहांसे चल दिया ॥ ८७॥ अनंतभगवान्‌को कहां देखूं? हे राजन्! इस प्रकार मनमें विचारते २ बछडेयुक्त वनमें इधर उधर दौडती हुई इस ब्राह्मणने एक गौ देखी ॥ ८८॥ उस गौको देखकर पूंछा कि हे गौ! तुमने कहीं अनंतदेवको देखा हो तो बता दो, यह सुनकर वह धेनु बोली—हे ब्राह्मणोंमें श्रेष्ठ कौण्डिन्य! मैं तो यह जानती भी नहीं कि अनंत कौन है॥ ८९॥

इसके पीछे कुछ थोडी दूर जाकर हरी २ घासमें स्थित एक वृषभको देखकर उससे पूंछा कि, हे गोस्वामीजी ! आपने कहीं अनंत भगवान्कोभी देखा है ? ॥९० ॥ यह सुनकर वह वृषभ ( बैल ) बोला हे महाराज ! मैंने तो अनन्तको कहीं भी नहीं देखा, यह सुनकर आगे जाकर दो सुन्दर पुष्करिणी तलैयें देखीं ॥ ९१ ॥ कैसी

ततो व्रजन् ददर्शाग्रे वृषभं शाद्वले स्थितम् ॥ दृष्ट्वा पप्रच्छ गोस्वामिन्ननन्तो वीक्षितस्त्वया॥९० ॥
वृषभस्तमुवाचैवं नानन्तो वीक्षितो मया ॥ ततो व्रजन् ददर्शाग्रे रम्यं पुष्करिणीद्वयम् ॥ ९१ ॥
अन्योऽन्यजलकल्लोलैर्वीचिपर्यन्तसङ्गतम् ॥ छन्नं कमलकह्लारैः कुमुदोत्पलमण्डितम् ॥९२॥ सेवितं
भ्रमरैर्हंसैश्चक्रैः कारण्डवैर्बकैः ॥ ते अपृच्छद् द्विजोऽनन्तो युवाभ्यामुपलक्षितः ॥ ९३॥ ऊचतुस्ते
पुष्करिण्यौ नानन्तो वीक्षितो द्विज ॥ ततो व्रजन् ददर्शाग्रे गर्दभं कुञ्जरं तथा ॥ ९४ ॥

वे दोना तलैयें थीं कि, आपसमें दोनोंकी लहरें मिलती थीं और कमलके डंठलोंसे अलग अलग दीखती हुई और बबूले कमलोंसे परिपूर्ण ॥ ९२ ॥ भौंरे और हंस चकई चकवे और कारंडव और बगले इनसे युक्त उन दोनों तलैयोंसे कौण्डिन्यने पूंछा कि, आपने कहीं अनन्तदेवको देखा है ? ॥ ९३ ॥ इस बातको सुनकर

वे दोनों तलैयें बोलीं कि हे विप्रकुलभूषण ! हमने तो अनंतको कहीं नहीं देखा, यह सुनकर उस ब्राह्मणने आगे जाकर एक हाथी और गधा देखा ॥ ९४ ॥ जिस प्रकार इन दोनों तलैयोंसे पूंछा था उसीप्रकार उस गधे और हाथीसे भी पूछा, उन्होंने भी कहा कि, हमने अनन्तको नहीं देखा। यह सुनकर वह ब्राह्मण निराश होकर बैठ गया ॥ ९५ ॥ हे नृप युधिष्ठिर ! वह कौंडिन्य बडादुःखसे व्याकुल हो और अपने जीवनसे निराश

तावप्युक्तौ द्विजेनेत्थं नेति ताभ्यां निवेदितम् ॥ एवं स पृच्छन्नष्टाशस्तत्रैव निषसाद ह ॥ ९५ ॥
कौण्डिन्यो विह्वलीभूतो निराशो जीविते नृप ॥ दीर्घमुष्णं च निश्वस्य पपात भुवि भारत ॥९६॥
प्राप्य संज्ञामनन्तेति जल्पन्नुत्थाय स द्विजः ॥ नूनं त्यक्ष्याम्यहं प्राणानिति सङ्कल्प्य चेतसि॥९७॥
यावदुद्बन्धनं वृक्षे चक्रे तावद्युधिष्ठिर ॥ कृपयानन्तदेवोऽस्य प्रत्यक्षं समजायत ॥ ९८ ॥

होकर और बडे २ श्वास लेता हुआ पृथ्वीपर गिरपडा ॥९६॥ फिर चैतन्यताको प्राप्त हो उठकर वह ब्राह्मण अनन्त २ कहकर प्राण छोडनेके अर्थ कहता हुआ ॥ ९७ ॥ जभी वृक्षमें मरनेके लिये बन्धन बांधने लगा तभी हे युधिष्ठिर ! इसके ऊपर कृपा कर अनन्तभगवान् प्रगट हो गये ॥ ९८ ॥

और वृद्धब्राह्मणका रूप बनाकर उससे बोले तुम यहां हमारे निकट आओ और दहिना हाथ पकडकर उसको गुहामें लिवाकर ले गये ॥ ९९ ॥ तहां लेजाकर सुन्दरस्वभाव रूपवती सिंहासनमें बैठे हुए अपने शरीरको दिखाया ॥ १०० ॥ और पांचजन्य शंख, सुदर्शनचक्र, कमल, कौमोदकी गदा, गरुड इन

वृद्धब्राह्मणरूपेण इत एहीत्युवाच तम् ॥ प्रगृह्य दक्षिणे पाणौ गुहायां प्रविवेश तम् ॥ ९९ ॥ स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युताम् ॥ तस्यां निविष्टमात्मानं दिव्यसिंहासने शुभे ॥ १०० ॥ पार्श्वस्थ शङ्खचक्राब्जगदागरुडशोभितम् ॥ दर्शयामास विप्राय विश्वरूपमनन्तकम् ॥ १०१ ॥ विभूतिभेदै श्चानन्तै राजन्तममितौजसम् ॥ कौस्तुभेन विराजन्तं वनमालाविभूषितम् ॥ १०२ ॥ तं दृष्ट्वा देवदेवेशमनन्तमपराजितम् ॥ वन्दमानो जगादोच्चैर्जयशब्दपुरःसरम् ॥ १०३ ॥

करके सहित उस ब्राह्मणको अपना विश्वरूप अनन्तस्वरूप दिखाया ॥ १०१ ॥ और विभूतियोंसे अनेक प्रकारके शोभित और अत्यन्त पराक्रमयुक्त कौस्तुभमणिसे प्रकाशमान वनमालाओंको धारण करे हुए उस ब्राह्मणको अपना स्वरूप दिखाया ॥ १०२ ॥ उस देवताओंके ईश्वर अजित अनंत भगवान्को देखकर

प्रणाम करके वह ब्राह्मण आपकी जय हो यह बडे जोरसे बोला ॥ १०३ ॥ हे कमलसदृश नेत्रवाले ! पापरूप मैंही हूं पापका करनेवालाभी मैं ही हूँ पापात्माभी मैंही हूं और पापहीसे पैदा हुआ हूं इसी कारणसे हे सब पापोंके दूरकरनेवाले ! आप मेरी रक्षा करिये, मैं आपकी शरण हूं ॥ १०४ ॥ हे भगवन् ! जो मेरा शिररूपी भौंरा आपके चरणकमलमें भ्रमने लगा इसीसे मेरा जन्म और जीवन आज

पापोऽहं पापकर्माहं,पापात्मा पापसंभवः॥ त्राहि मां पुण्डरीकाक्ष सर्वपापहरो भव ॥१०४॥ अद्य मे सफलं, जन्म जीवितं च सुजीवितम् ॥ यत्तवांघ्र्यब्जयुगुले मन्मूर्धा भ्रमरायते ॥ १०५ ॥ तच्छ्रुत्वाऽनन्तदेवेशः प्राह सुस्निग्धया गिरा ॥ मा भैस्त्वं ब्रूहि विप्रेन्द्र यत्ते मनसि वर्तते॥१०६ ॥कौण्डिन्य उवाच॥ मया भूत्यवलितेन त्रोटिकोऽनन्तदोरकः॥ तेन पापविपाकेन भूतिर्मे प्रलयं गता ॥१०७॥

सफल हुआ ॥ १०५ ॥ यह सुनकर देवताओंके ईश्वर अनंतदेव मनोहर वाणीसे बोले, हे ब्राह्मणोंमें श्रेष्ठ ! तू भय मत कर जो तेरे मनमें है सो कह ॥ १०६ ॥ तब यह सुनकर वह कौण्डिन्य बोला हे स्वामिन् ! मैंने धनके अहंकारसे अनन्तका डोरा तोड़ डाला था सो इसी पापसे मेरा सब ऐश्वर्य नष्ट हो गया ॥ १०७ ॥

घरमें रोज लड़ाई क्लेश होता है और कोई मुझसे बोलता भी नहीं जबमैं दुखःसे निर्वेद ( व्याकुलता ) को प्राप्त हो वनमें आपके दर्शनकी इच्छासे आया॥ १०८॥ तब हे देवताओंके ईश्वर ! कृपा करके आपने अपना दर्शन दिया सो अब आप मेरे ऊपर कृपा कर उस पापकी शान्तिका उपाय कहिये और कारण भी बताइये॥१०९॥

स्वजनैः कलहो गेहे न कश्चिन्मां प्रभाषते ॥ निर्वेदाद्भ्रमितेऽरण्ये तव दर्शनकांक्षया ॥ १०८॥ कृपया देवदेवेश त्वयाऽऽत्मा सम्प्रदर्शितः ॥ तस्य पापस्य मे शान्तिं कारुण्याद्वक्तुमर्हसि ॥ १०९॥ श्रीकृष्ण उवाच ॥ तच्छ्रुत्वाऽनन्तदेवेश उवाच द्विजसत्तमम् ॥ भक्त्या संतोषितो देवः किं न दद्याद्युधिष्ठिर ॥११०॥ अनन्त उवाच ॥ स्वगृहे गच्छ कौण्डिन्य मा विलम्बं कुरु द्विज ॥ चरानन्तव्रतं भक्त्या नव वर्षाणि पञ्च च ॥ १११ ॥

इतनी कथा सुनाय श्री कृष्णजी बोले—हे युधिष्ठिर! उस ब्राह्मणके वचन सुनकर विष्णु भगवान् बोले कि अनंत भगवान् प्रसन्न होकर क्या नहीं दे देते हैं अर्थात् सभी कुछ दे देते हैं॥११०॥तब अनन्तजी बोले—हे कौण्डिन्य ! तू देर मत कर॥ जल्दी अपने घर जाकर बड़ी भक्तिपूर्वक चौदह वर्षतक अनन्तका व्रत कर ॥ १११ ॥

सारे पापोंसे छूटकर उत्तम सिद्धिको पावोगे। और बेटे पोतोंको उत्पन्न करके अनेक प्रकारके मनवांछित भोगोंको भोगकर ॥ ११२ ॥ मरते समय मेरा स्मरण करनेसे निःसन्देह मुझमें ही मिल जायगा यह मैं और भी सारे संसारका उपकार करनेवाला तुझको वर देता हूं ॥ ११३ ॥ जो कोई शीला और अनंतके आख्यनको

सर्वपापविशुद्धात्मा प्राप्स्यसे सिद्धिमुत्तमाम् ॥ पुत्रपौत्रान् समुत्पाद्य भुक्त्वा भोगान् यथेप्सितान् ॥ ११२ ॥ अन्ते मत्स्मरणं प्राप्य मामुपैष्यस्यसंशयम् ॥ अन्यं च ते वरं दाद्मि सर्वलोकोपकारकम् ॥ ११३ ॥ इदमाख्यानकवरं शीलानन्तव्रतादिकम् ॥ करिष्यति नरो यस्तु कुर्वन् व्रतमिदं शुभम् ॥११४॥सोऽचिरात् पापनिर्मुक्तः प्राप्नोति परमां गतिम् ॥ गच्छ विप्र गृहं शीघ्रं पथा येनागतो ह्यसि ॥ ११५ ॥

सुनेगा और जो इस सुन्दर व्रतको करेगा ॥ ११४ ॥ वह बहुत जल्दी पापसे छूटकर मोक्षको पावेगा और हे ब्राह्मण ! तू जिस मार्गसे आया है उसी मार्गसे अपने घरको चला जा ॥११५॥

यह सुनकर कौण्डिन्य बोला, हे स्वामिन् ! जो मैंने वनमें फिरते फिरते २ तमाशा देखा सो मैं आपको सुनाता हूं आप कृपाकर बतलाइये । हे जगत्के गुरु ! उसके सुननेकी मुझे बडी इच्छा है ॥ ११६ ॥ वह जो मैंने आमका वृक्ष देखा था सो वह कौन था और वह वृषभ और वह गौ कौन थी । कमल और कह्लारोंसे शोभित

कौण्डिन्य उवाच ॥ स्वामिन् पृच्छामि ते ब्रूहि किंचित् कौतूहलं मया ॥ अरण्ये भ्रमता दृष्टं तद्वदस्व जगद्गुरो ॥ ११६ ॥ यश्चूतवृक्षः कस्तत्र का गौः को वृषभस्तथा ॥ कमलोत्पलकह्लारैः शोभितं सुमनोहरम् ॥ ११७ ॥ मया दृष्टं महारण्ये किं तत् पुष्करिणीद्वयम् ॥ कः खरः कुञ्जर कोऽसौ कोऽसौ वृद्धो द्विजोत्तमः ॥ ११८ ॥ अनन्त उवाच ॥ स चूतवृक्षो विप्रोऽसौ विद्यावेदविशारदः ॥ विद्या न दत्ता शिष्येभ्यस्तेनासौ तरुतां गतः ॥ ११९ ॥

बहुत सुन्दर ॥ ११७ ॥ वनमें मैंने दो तलैयें देखी थीं वह दोनों कौन थीं और गधा और वह हाथी कौन था, और यह वृद्ध ब्राह्मण कौन था ॥ ११८ ॥ यह सुनकर अनन्त भगवान् बोले—वह आमका वृक्ष तो सम्पूर्ण विद्याओंमें चतुर महापण्डित था इसने शिष्योंको विद्या नहीं पढ़ाई थी, इसी कारणसे

वृक्ष हो गया ॥ ११९ ॥ और वह गौ बीजोंकी हरनेवाली ऊषरभूमि थी पहले उसने बीज हरे थे, वह वृषभ धर्म था जो घासमें उपस्थित तूने देखा था ॥१२०॥ वह धर्माधर्मका विचार नहीं करता था इसी कारणसे वृषभ हुआ और वह दोनों तलैयें जो देखी थीं वे ब्राह्मणी दोनों बहनें थीं ॥ १२१ ॥ आपसमें जो कुछ

या गौर्वन्सुधरा दृष्टा पूर्वं सा बीजहारिणी ॥ वृषो धर्मस्त्वया दृष्टः शाद्वले यः समास्थितः॥१२०॥
धर्माव्यवस्थानं तच्च पुष्करिणीद्वयम्॥ब्राह्मण्यौ केचिदप्यास्तां भगिन्यौ ते परस्परम् ॥ १२१ ॥
धर्माधर्मादि यत्किंचित्ते निवेदयतो मिथः ॥ विप्राय न क्वचिद्दत्तमातिथौ दुर्बलेऽपि वा ॥ १२२ ॥
भिक्षा दत्ता न चार्थिभ्यस्तेन पापेन कर्मणा ॥ बीचिकल्लोलमालाभिर्गच्छतस्ते परस्परम् ॥ १२३॥
खरः क्रोधस्तथा दृष्टः कुञ्जरो मद उच्यते ॥ ब्राह्मणोऽसावनन्तोऽहं गुहासंसारगह्वरम् ॥१२४॥

धर्माधर्मका होता था वह सब आपही आपसमें बांटकर खा लेती थीं उन दोनोंने ब्राह्मण और अभ्यागत और दुर्बल ॥ १२२ ॥ भिखारी इनको कुछ भी नहीं दिया इसी पापसे वे दोनों आपसमें लहरोंकी लंघारोंसे दुःखी होती हैं और उनका जल लहरोंके मारे एकका दूसरेमें जाता है ॥ १२३ ॥ वह गधा महाक्रोधी था और वह

हाथी अहंकार था और वह वृद्धब्राह्मण तो संसाररूपी गुहामें मैं ही था ॥ १२४ ॥ इस प्रकार अनन्त भगवान् कहकर उसी समय अतर्धान हो गये और वह ब्राह्मण स्वप्नके समान उस वृत्तांतको देखकर अपने घरको चला गया ॥ १२५ ॥ श्रीकृष्णजी बोले हे युधिष्ठिर ! चौदहवर्षतक अनंतव्रतको करके सारे भोगोंको भोगकर ॥ १२६ ॥ वह ब्राह्मण

इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत ॥ स्वप्नप्रायं तु तद् दृष्ट्वा ततः स्वगृहमागतः ॥ १२५ ॥
कृत्वाऽनन्तव्रतं सम्यङ् नव वर्षाणि पञ्च च ॥ भुक्त्वा सर्वमनन्तेन यथोक्तं पाण्डुनन्दन ॥ १२६ ॥
अन्ते च स्मरणं प्राप्य गतोऽनन्तपुरे द्विजः ॥ तथा त्वमपि राजर्षे कथां शृण्वन् व्रतं कुरु ॥ १२७ ॥
प्राप्स्यसे चिन्तितं सर्वमनन्तस्य वचो यथा ॥ यद्वै चतुर्दशे वर्षे फलं प्राप्तं द्विजन्मना ॥ १२८ ॥
वर्षैकेन तदाप्नोति कृत्वा साख्यानकं व्रतम् ॥ एतत्ते कथितं भूप व्रतानामुत्तमं व्रतम् ॥ १२९ ॥

मरते समय विष्णुभगवान्‌का ध्यान कर अनंतके लोकको चला गया इसी प्रकार हे राजन् ! आप भी व्रत करके इसकी कथाको सुनिये ॥ १२७ ॥ इसीसे तुम इस राज्यको प्राप्त हो जाओगे जैसे अनंतके कहनेसे वह ब्राह्मण चौदह वर्षमें अपने इष्टफलको प्राप्त हो गया ॥ १२८ ॥ इस व्रतके करनेसे और कथाके सुननेमें प्राणी

एकही वर्षमें फलको प्राप्त होजाता है। हे राजन् ! यह व्रतोंमें उत्तम व्रत हमने तुम्हें सुनाया ॥ १२९ ॥ जिस व्रतके करनेसे निःसंदेह प्राणी पापोंसे छूट जाते हैं और जो इस कथाको सुनते हैं और जो पढते हैं वे भी सारे पापोंसे छूटकर निःसंदेह विष्णुलोकको चले जाते हैं ॥ १३० ॥ श्रीकृष्णचन्द्र बोले हे युधिष्ठिर ! जो

यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ येऽपि शृण्वन्ति सततं पठ्यमानं पठन्ति ये ॥ तेऽपि पापाविनिर्मुक्ताः प्राप्स्यन्ति च हरेः पदम् ॥ १३० ॥ संसारसागरगुहासु सुखं विहर्तुं वाच्छन्ति ये कुरुकुलोद्भवशुद्धसत्त्वाः॥ सम्पूज्य च त्रिभुवनेशमनन्तदेवं बध्नन्ति दक्षिणकरे वरदोरकं ते ॥ १३१ ॥

इत्यनन्तकथा समाप्ता ॥

पवित्र प्राणी संसारसागरकी गुफामें सुखसे विचरनेकी इच्छा करते हैं वे अनन्तदेवका पूजन करके दाहिने हाथमें अनन्तका पवित्र डोरा बांधते हैं ॥१३१॥ इति श्रीव्रजरत्नभट्टाचार्यकृतभाषाटीकासहित अनन्तव्रतकथा समाप्ता ॥

सोरठा–क्षमा करहु बुधलोग, भूल चूक पावो जहाँ। आशिष देहु संयोग, बडे निरन्तर प्रीति बहु ॥ १ ॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गङ्गाविष्णु श्रेष्ठिना स्वकीये "लक्ष्मीवेङ्कटेश्वर" स्टीम् मुद्रणालये मुद्रयित्वा प्रकाशितम् ।
संवत् १९९१, शके १८५६.

## पुस्तक मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,
कल्याण-बम्बई.

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,
खेतवाडी-बम्बई.

